# कर्पूरमञ्जरी

## नाम

सट्टकम्।

## महाकवि श्रीराजशेखरविरचितम्।



पण्डितकुलपतिना बि, ए उपाधिधारिणा

**श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण**

विरचितया व्याख्यया समेतम्

**तदात्मजाभ्यां श्रीआशुबोध-विद्याभूषण**

तथा

**श्रीनित्यबोध-विद्यारत्नाभ्यां**

प्रतिसंस्कृतं प्रकाशितञ्च।

तृतीयसंस्करणम्।

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे मुद्रितम्।

इं १८९७।



मूल्यं [illegible]।

प्रकाशक— { पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— { २नं०, रमानाथ मजुमदार ष्ट्रीट्
आम्हार्ष्ट ष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

अवि अ—अकलिअपरिरंभविब्भमाइं
अजणिअचुंबणडंबराइं दूरम् ।
अघडिअघणताडणाइं णिच्चं
णमह अणंगरईण मोहणाइं ॥ * ॥२॥

अवि अ—
ससिखंडमंडणाणं समोहणासाणं सुरअणपिआणम् ।
गिरिसागिरिंदसुआणं संघाडो वो सुहं देउ ॥ † ॥३॥

अपि च—
अकलितपरिरम्भविभ्रमाणि अजनितचुम्बनडम्बराणि दूरम् ।
अघटितघनताडनानि नित्यं नमतानङ्गरत्योर्मोहनानि ॥

अपि च—
शशिखण्डमण्डनयोः संमोहनाशयोः सुरगणप्रिययोः ।
गिरिश-गिरीन्द्रसुतयोः सङ्घटना वः सुखं ददातु ॥

रीतिस्तु मागधी। वैदर्भ्यादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ॥ रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥" इति। काव्यकुशलाः काव्येषु तदर्थपर्यालोचनेषु इति भावः, कुशलाः निपुणाः, सन्तः इत्यर्थः, चकोराः पक्षिविशेषाः ज्योत्स्नामिव, चन्द्ररीति-समर्पितां कर्पूरमञ्जरीमिति शेषः, निभिडन्तु विशेषेण आस्वादयन्तु। शार्दूल-विक्रीडितं वृत्तम्। "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति तल्ल-क्षणात् ॥१॥

अकलितेति।—न कलितः न कृतः परिरम्भविभ्रमः आश्लेषविलासः येषु तथा-भूतानि, न जनितः नोत्पादितः, चुम्बने डम्बरः उद्यमः येषु तथाविधानि, न घटितं घनं दृढं ताडनं लिङ्गेन भगस्येति भावः येषु तथोक्तानि, अनङ्ग-रत्योः काम-रत्योः, चन्द्रपाल-कर्पूरमञ्जर्योरिति व्यज्यते, मोहयन्ते रमन्ते इति मोहनानि सुरतानि, अन्योन्य-प्रकाराभ्यन्तराणीति ध्वनिः, दूरमतिमात्र नित्यं सततं नमत अभिवन्दध्वम्, आस्वादयतेति व्यज्यते। एतच्च निरवच्छिन्नानन्दमयत्वेन तदास्वादजन्ये परिरम्भादि-विशेषस्यानुभवविषयत्वाभावादिति भावः ॥ २ ॥

शशीति।—शशिखण्डः अर्धचन्द्रः मण्डनं शिरोभूषणं ययोः तथोक्तयोः, मोहने सुरते या आशा अभिलाषः तया सह वर्तेते इति तथोक्तयोः, सुरगणानां देवानां प्रिययोः

अपि च—

ईसारोसप्पसादप्पणदिसु बहुसो सग्गगंगाजलेहिं
आ मूलं पूरिदाए तुहिणअरकलारुप्पसुत्तीअ रुद्दो ।
जोण्हामुत्ताफलिल्लं णअमउलिणिहित्तग्गहत्थेहिं दोहिं
अग्घं सिग्घं व देंतो जअइ गिरिसुआपाअपंकेरुहाणं ॥*॥४॥

[नान्द्यन्ते] (क)।

---

अपि च—

ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलैः
आ मूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलाढ्यं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्या-
मर्घ्यं शीघ्रमिव ददज्जयति गिरिसुतापादपङ्केरुहयोः ॥

---

कमलकरयोः, यद्वा—सुरतस्य: प्रिया वल्लभा ययोः तयोः, गिरीश-गिरीन्द्रसुतयोः हर-पार्वत्योः, सङ्घटना सम्मेलनं, सन्ततम् इति यावत्, वः युष्माकं सुखमनिति वा, सुखम् आनन्दं ददातु ॥ ३ ॥

ईर्ष्येति ।—बहुशः पुनः पुनः ईर्ष्या परोत्कर्षासहिष्णुता, तदुक्तं रसार्णवसुधाकरे—"परोत्कर्षाक्षमेर्ष्या स्यात् दौर्जन्यान्मन्युतोऽपि वा" इति, सा च स्वर्गङ्गाया पतिशिरसि स्थितावासिति भावः, तथा यः रोषः कोपः तस्मिन् सति प्रसादाय याः प्रणतयः पादतलपतनानि तासु, प्रसादार्थं क्रियमाणासु इति भावः, द्वाभ्यां नतमौलिनिहिताग्रहस्ताभ्याम् अवनतमस्तकनिहिताभ्याम् अग्रहस्ताभ्यां, गृहीतया इति अध्याहार्यं, स्वर्गगङ्गाजलैः शिरःस्थितैरिति भावः, आमूलं पूरितया तुहिनकरकला चन्द्रकला एव रूप्यशुक्तिः रजतनिर्मितमुक्तास्फोटः तया, 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः ; ज्योत्स्ना तदीयचन्द्रिका एव मुक्ताफलमिति रूपकं, तेन आढ्यं युक्तम्, अर्घ्यं शीघ्रं, मानभङ्गो भूदिति धिया इति भावः, गिरिसुतायाः गौर्याः पादपङ्केरुहयोः चरणकमलयोः दददिव इत्युत्प्रेक्षा, रुद्रः हरः जयति सर्वोत्कर्षेण वर्तते इत्यर्थः । बहुश इति तस्याः प्रायशो मानिनीत्वं व्यनक्ति । देवीपादपद्मयोश्चन्द्रकलाकल्पमर्घ्यं सदर्शोकनेन अस्याः उद्दीपनतया अनुरागावेशात् झटिति मानभङ्गः स्यादिति धियेति भावः । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ४ ॥

(क) नान्द्यन्ते इति ।—नन्दयति सभ्यान् इति नान्दी आशीर्नमस्क्रियाद

सूत्रधारः। (ख) [परिक्रम्य नेपथ्याभिमुखमवलोक्य]। किं उण णिट्टवट्टो विअ दीसदि अम्हाणं कुसीलवाणं परिअणो,— जदो एक्का पत्तोचिआइं णिअआइं उच्चिणेदि। इअरा कुसुमावलीओ गुंफेदि। अण्णा पडिसीसआइं पडिसारेदि। कावि क्खु वण्णिआओ पट्टए वट्टेदि। एस वंसे ठाविदो थाणो। इअं वीणा पडिसारीअदि। इमे तिण्णि मिअंगा सज्जीअंति। एस कांसतालाणं पक्खालणुज्जलाणं कलओ। एदं धुआगीदं आलवीअदि। ता किंत्ति कुडुंबं आकारिअ पुच्छिस्सं ? * (ग)

---

* किं पुनर्नृत्यप्रवृत्त इव दृश्यतेऽस्माकं कुशीलवानां परिजनः,—यत एका पात्रोचितानि निचयानि उच्चिनोति। इतरा कुसुमावलीर्गुम्फति। अन्या प्रतिशीर्षकाणि प्रसारयति। काऽपि खलु वर्णिकाः पट्टे वर्त्तयति। एष वंशे स्थापितो ध्वानः। इयं वीणा प्रतिसार्य्यते। इमे त्रयो मृदङ्गाः सज्जान्ते। एष कांस्यतालानां प्रक्षालनोज्ज्वलानां कलकलः। एतद्ध्रुवागीतम् आलप्यते। तत् किमिति कुटुम्बमाकार्य्य पृच्छामि ? (ग)

---

कविवाक्यं, तदुक्तं दर्पणे—"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विज-नृपादीनां तस्मात् नान्दीति संज्ञिता॥ मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥" इति। नाट्यप्रदीपे च—"नन्दन्ति काव्यानि कवीन्द्रवर्य्याः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादलं सा कथितेह नान्दी॥" इति। इयञ्चावश्यकी, तदुक्तं दर्पणे—"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥ प्रत्याहारादि-कान्यङ्गान्यस्य भूयांसि यद्यपि। तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये॥" तथा अन्ते अवसाने।

(ख) सूत्रधारः सूत्रं धारयतीति सूत्रधारः, तदुक्तं सङ्गीतसर्वस्वे—"नर्त्तनीयकथासूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥"

(ग) पात्रोचितानि कुशीलवोचितानि निचयानि वस्त्राणि। प्रतिशीर्षकाणि वेष्टनाय वसनपट्टानि। तदुक्तं नाट्यदीपे—"नानावर्णविभूषितविदूषकपुरोगमाम्। वेष्टनाय च पट्टानि प्रतिशीर्षाणि धारयेत्॥" इति। वर्णिकाः पट्टे वर्त्तयतीति—वर्णिकाः

[नेपथ्याभिमुखमवलोक्य संज्ञापयति] (घ) ।

[ततः प्रविशति पारिपार्श्विकः] (ङ) ।

पारिपार्श्विकः । आणवेदु भावो । * (च)

सूत्रधारः । [विचिन्त्य] । किं उण णिट्टपउट्टा विअ दीसध ? †

पारिपार्श्विकः । भाव ! सट्टअं णच्चिदव्वं । ‡ (छ)

---

* आज्ञापयतु भावः ।

† किं पुनर्नृत्यप्रवृत्ता इव दृश्यध्वे ?

‡ भाव ! सट्टकं नर्तितव्यम् ।

वर्णविशेषान् पट्टे फलके वर्णयति विन्यस्यति, वर्णिकाभिः फलकं चित्रयतीत्यर्थः । एष इत्यादि । वंशे वेणुवाद्यविशेषे ध्वानः स्वरविशेषः स्थापितः योजितः, वेणुवाद्ये स्वरसंयोगः कृत इत्यर्थः । प्रतिमार्ग्यते विशुद्धा क्रियते इति यावत् । इमे कथं मृदङ्गाः सज्ज्यन्ते इति—सज्ज्यन्ते आलिङ्ग्यन्ते, नेपाटिनेति भावः । कांस्यतालानामित्यादि—कांस्यतालानां करतालानां प्रक्षालन उज्ज्वलानां प्रक्षालनेन मलनिष्कासनेन उज्ज्वलाः चिक्कणाः तेषाम् । छलच्छलः शब्दविशेषः । ध्रुवागीतम् आलप्यते इति—सङ्गीतेषु यदंशः प्रतिशाखया सम्बध्यते सा ध्रुवा, तया सह गीतं सङ्गीतम् आलप्यते प्रस्तूयते । ध्रुवा च पञ्चविधा, तदुक्तं भरतेन—"प्रावेशिकी चाक्षेपिकी कालिकी उत्थापिनी प्रासादिकी च" इति । कुटुम्बमाकार्य्येति—कुटुम्बं परिजनम् आकार्य्य आहूय ।

(घ) संज्ञापयति संज्ञया आह्वयतीत्यर्थः ।

(ङ) परितः पार्श्वे तिष्ठतीति पारिपार्श्विकः । तदुक्तं दर्पणे—"तस्यानुचरः पारिपार्श्विकः, तस्मात् किञ्चिदूनो नटः" इति ।

(च) भावो विद्वान् । 'भावो विद्वान्' इत्यमरः ।

(छ) सट्टकम् उपरूपकविशेषः, तदुक्तं दर्पणे—"नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ संलापकं श्रीगदितं शिल्पकञ्च विलासिका । दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥ अष्टादश प्राहुरुपरूपकाणि मनीषिणः ॥" इति । तल्लक्षणोक्तं भावप्रकाशे—"सैव

सूत्रधारः । को उण तस्स कई ? । *

पारिपार्श्विकः ।—

भाव ! कहिज्जदु एदं को भणइ रअणिवल्लहसिहंडो ? ।
रहुउलचूडामणिणो महेंदपालस्स को अ गुरू ? ॥ † ॥ ५ ॥

सूत्रधारः । [विचिन्त्य] । पण्होत्तरं क्खु एदं । (ज) [प्रकाशम्] । राअसेहरो ‡ ।

पारिपार्श्विकः । सो एदस्स कई । §

सूत्रधारः । किं सट्टअं ? । ¶

पारिपार्श्विकः । [स्मृत्वा] । कथिदं ज्जेव्व छइल्लेहिं । ** (झ)—

* कः पुनस्तस्य कविः ? ।

† भाव ! कथ्यतामेतत् को भण्यते रजनीवल्लभशिखण्डः ? ।
रघुकुलचूडामणेर्महेन्द्रपालस्य कश्च गुरुः ? ॥

‡ प्रश्नोत्तरं खलु एतत् । राजशेखरः ।

§ स एतस्य कविः ।

¶ किं सट्टकम् ? ।

** कथितमेव विदग्धैः ।

अवेशकेनापि विष्कम्भेण विना कृता । अद्भुतार्थोपविन्यास-चतुर्जवनिकान्तरा ॥ प्राकृत-प्राकृतमयो सट्टकं नामतो भवेत् ॥" इति । नर्त्तितव्यं नाट्येन यथोक्तम् ।

भावेति ।—भाव ! विद्वन् ! रजनीवल्लभः चन्द्रः, शिखण्डः शिरोभूषणं यस्य अधीशः कः ? कश्च रघुकुलचूडामणेः रघुवंशशिरोरत्नस्य महेन्द्रपालस्य गुरुः ? भण्यते कथ्यते, एतत् कथ्यताम् । एतेन अस्य कविः राजशेखर इत्युक्तं, राजा चन्द्रः शेखरं शिरोभूषणं यस्येति व्युत्पत्तेरिति भावः ॥ ५ ॥

(ज) प्रश्नोत्तरमिति ।—कथ्यतामेतत् को भण्यते इति प्रश्ने यदुत्तरं तदेव अस्य कवेरभिधानमिति भावः । प्रकाशं सर्वश्राव्यस्य वचनस्य प्राक् प्रकाशमिति काव्ये वाच्यं, "सर्वश्राव्यं प्रकाशं स्यात्" इत्युक्तेः ।

(झ) [illegible]

सो सट्टओ त्ति भण्णइ दूरं जो णाडिआइं अणुहरइ।
किं उण एत्थ पवेसअविक्कंभाइं ण केवलं होंति ॥ * ॥ ६ ॥

सूत्रधारः। [ विचिन्त्य ]। ता किं त्ति संकिअं परिहरिअ पाउदबंधे पउट्टो कई ? †

पारिपार्श्विकः। सव्वभासाचउरेण तेण भणिदं ज्जेव। जधा—

अत्थणिवेसा ते ज्जेव सद्दा ते ज्जेव परिणमंताइं।
उत्तिविसेसो कव्वो भासा जा होइ सा होदु ॥ ‡ ॥ ७ ॥

---

* तत् सट्टकमिति भण्यते दूरं यो नाटिका अनुहरति।
किं पुनरत्र प्रवेशकविष्कम्भकौ न केवलं भवतः ॥

† तत् किमिति संस्कृतं परिहृत्य प्राकृतबन्धे प्रवृत्तः कविः ?।

‡ सर्वभाषाचतुरेण तेन भणितमेव। यथा—
अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु ॥

---

तदिति।—सः, प्रबन्ध इति शेषः, दूरम् अतिशयेन, नाटिका अनुहरति अनुकरोति, तत् सट्टकमिति भण्यते कथ्यते। किं पुनः किन्तु केवलमत्र सट्टके प्रवेशकविष्कम्भकौ न भवतः न स्त इत्यर्थः। प्रवेशक-विष्कम्भकयोर्लक्षणमुक्तं दर्पणे—"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीच-मध्यमकल्पितः॥ प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" ॥ ६ ॥

अर्थनिवेशा इति।—परिणमन्तोऽपि परिणतिं गच्छन्तोऽपि, संस्कृतता प्राप्नुवन्तो-ऽपीत्यर्थः, एतेन प्राकृतस्य संस्कृतयोनित्वं गम्यते, उक्तञ्च प्राकृतसञ्जीवन्या—"प्राकृतस्य तु सर्वमेव संस्कृतं योनिः" इति। अर्थनिवेशाः अर्थानाम् अभिधेयवस्तूनां निवेशाः प्रकाराः, ते एव यथा प्राकृते तथैव संस्कृते इति भावः। शब्दास्ते एव ते एव शब्दाः, केवलम् असंस्कृततया प्राक् विकृतरूपा इति भावः। काव्यम् उक्तिविशेषः वाग्विन्यास-

अवि अ—

परुसा सक्किअबंधा पाउदबंधो वि होइ सुउमारो ।
पुरुसमहिलाणं जेत्तिअमिहंतरं तेत्तिअमिमाणं ॥*॥ ८ ॥

सूत्रधारः । ता अप्पा किं ण वण्णिदो तेण ? । †

पारिपार्श्विकः । सुणु, वण्णिदो ज्जेव तक्कालकइणं मज्झम्मि मिअंकलेहाकहाआरेण अवराइदेण । जधा—

बालकई कइराओ णिब्भअराअस्स तह उवज्झाओ ।
इत्ति अस्स परंपरए अप्पा माहप्पमारूढो ॥ ‡ ॥ ९ ॥

---

* अपि च—

परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः ।
पुरुषमहिलानां यावदिहान्तरं तावत् तेषु ॥

† तत् आत्मा किं न वर्णितस्तेन ?

‡ शृणु, वर्णित एव तत्कालकवीनां मध्ये मृगाङ्कलेखाकथाकारेण अपराजितेन । यथा—

बालकविः कविराजो निर्भयराजस्य तथोपाध्यायः ।
इत्यस्य परम्परया आत्मा माहात्म्यमारूढः ॥

---

विशेषः । उक्तञ्च दर्पणे—"वाक्यं रसात्मकं काव्यम्" इति । भाषा या भवति सा भवतु, न तत्र आदर इति भावः ॥ ७ ॥

परुषा इति ।—संस्कृतबन्धाः संस्कृतरचनाः, परुषाः कर्कशाः, प्राकृतबन्धः अपि-रेवार्थः, प्राकृतरचनैवेत्यर्थः, सुकुमारः कोमलः भवति, इह जगति पुरुषमहिलानां पुंसां महिलानां कामिनीनाञ्च यावत् अन्तरं प्रभेदः, तेषु संस्कृतप्राकृतेषु तावत्, अन्तरमित्यनेन अन्वयः । संस्कृतं पुमान् प्राकृतं स्त्रीति भावः ॥ ८ ॥

बालकविरिति ।—कविषु राजते इति कविषु राजा वेति कविराजः, तथा निर्भय-राजस्य महेन्द्रपालस्य उपाध्यायः गुरुः बालकविः अभिनवकविः, राजशेखर इति यावत्, इति अनेन प्रकारेण, अस्य राजशेखरस्य आत्मा परम्परया माहात्म्यं महिमानम् आरूढः नीतः । स्वयमयं कविः स्वनामकीर्तनेन आत्मश्लाघां न अकरोत्. अपराजितेन कविना यत्र माहात्म्यं कीर्तितं, तदेव माहात्म्यं प्रकाश्यते यद्नेन कीर्त्यते इति भावः ॥ ९ ॥

सो अस्स कई सिरिराअसेहरो तिहुअणं पि धवलेंति ।
हरिणंकपालिसिद्धिए णिक्कलंका गुणा जस्स ॥ * ॥ १० ॥

सूत्रधारः । ता केण समादिट्ठा पउंजध ? † । (अ)

पारिपार्श्विकः ।—
चाउहाणकुलमोलिमालिआ राअसेहरकइंदगेहिणी ।
भत्तुणो किदिमवंतिसुंदरी सा पउंजइदुमेदमिच्छदि ॥ ११ ॥

किंच—
चंदपालधरणीहरिणंको चक्कवट्टिपअलाहणिमित्तं ।
एत्थ सट्टअवरे रससोत्ते कंतलाहिवसुदं परिणेदि ॥ ‡ ॥ १२ ॥

* स अस्य कविः श्रीराजशेखरः त्रिभुवनमपि धवलयन्ति ।
हरिणाङ्कप्रतिपङ्क्तिसिद्ध्या निष्कलङ्का गुणा यस्य ॥

† तत् केन समादिष्टाः प्रयुङ्ग्ध्वम् ?

‡ चाहुवानकुलमौलिमालिका राजशेखरकवीन्द्रगेहिनी ।
भर्तुः कृतिमवन्तिसुन्दरी सा प्रयोजयितुमेतदिच्छति ॥

किञ्च—
चन्द्रपालधरणीहरिणाङ्कश्चक्रवर्तिपदलाभनिमित्तम् ।
अत्र सट्टकवरे रसस्रोतसि कुन्तलाधिपसुतां परिणयति ॥

स इति ।—अस्य सन्दर्भस्य कविः स प्रसिद्धः श्रीराजशेखरः, यस्य निष्कलङ्काः निर्मलाः, निर्दोषा इत्यर्थः, गुणाः हरिणाङ्कस्य चन्द्रस्य, प्रतिपङ्क्त्या प्रातिकूल्येन, निष्कलङ्कत्वेन धर्मेणभुवनव्यापित्वेन चेति भावः, सिद्धिः सन्दर्भसमापनं तया, त्रिभुवनमपि धवलयन्ति उज्ज्वलयन्ति । चन्द्रस्तु सकलङ्कः भूतलमात्रोद्योतकश्च, अस्य तु चरितं निष्कलङ्कं त्रिभुवनोद्योतकञ्चेति व्यतिरेकोऽलङ्कारः, तदुक्तं दर्पणे—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा । व्यतिरेक इति—" ॥ १० ॥

(अ) समादिष्टाः आज्ञप्ताः । प्रयुङ्ग्ध्वम् अभिनयत ।

चाह्विति ।—चाहुवानकुलं विख्यातवंशविशेषः, तस्य मौलिमालिका शिरोमाल्यभूता, तत्कुलभूषणभूतेत्यर्थः, राजशेखरकवीन्द्रस्य गेहिनी भार्या, या अवन्तिसुन्दरी नाम, सा भर्तुः राजशेखरस्य कृतिं रचितम्, एतत् कर्पूरमञ्जरीनाम सट्टकमिति यावत्, प्रयोजयितुं नाट्येन प्रदर्शयितुम्, इच्छति अभिलषति । कवेरेव भार्या एतस्य प्रयोजिका इति सन्दर्भार्थः ॥ ११ ॥

ता भाव ! एहि, अणंतरकरणिज्जं (ट) संपादेम्ह, जदो महाराअदेईणं भूमिअं (ठ) घेत्तूण अज्जो अज्जघरिणिआ अ जवणिअंतरे वट्टदि । *

[ इति परिक्रम्य निष्क्रान्तौ ] ।

[ प्रस्तावना ] । (ड)

[ ततः प्रविशति राजा देवी विदूषको विभवतश्च (ढ) परिवारः । सर्वे परिक्रम्य यथोचितमुपविशन्ति ] ।

राजा । देवि दक्खिणावहणरिंदणंदिणि ! वड्ढावीअसि इमिणा वसंतारंभेण । (ण) जदो— †

---

* तत् भाव ! एहि, अनन्तरकरणीयं सम्पादयावः, यतो महाराजदेव्योर्भूमिकां गृहीत्वा आर्य्य आर्य्यभार्य्या च जवनिकान्तरे वर्त्तते ।

† देवि दक्षिणापथनरेन्द्रनन्दिनि ! वर्द्धसेऽनेन वसन्तारम्भेण । यतः,— (ण)

चन्द्रेति ।—चन्द्रपाल एव धरणीहरीन्द्रः भूचन्द्रः चक्रवर्त्तिपदस्य सार्वभौमपदस्य, लाभनिमित्तं लाभाय अत्र रसानां शृङ्गारादीनां कलानाञ्च, स्रोतसि प्रवाहभूते, सट्टकवरे नाट्यश्रेष्ठे, कुन्तलाधिपस्य कुन्तलेश्वरस्य सुतां कर्पूरमञ्जरीं परिणयति उद्वहति ॥ १२ ॥

(ट) अनन्तरकरणीयम् अतःपरं कर्त्तव्यम् ।

(ठ) भूमिका नेपथ्यम् ।

(ड) प्रस्तावनेति ।—प्रस्तूयते प्रबन्धेन सूच्यते अनयेति प्रस्तावना अभिनेतव्यविषयसूचनेत्यर्थः । तदुक्तं दर्पणे—"नटी विदूषको वाऽपि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनेति च ॥"

(ढ) विदूषकः नायकस्य नर्मसचिवविशेषः, उक्तञ्च दर्पणे—"कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः ॥" इति । विभवतः विभवः सम्पत् तदनुसारेणेत्यर्थः ।

(ण) वर्द्धसे वृद्धिं गच्छसि, नन्दसीत्यर्थः ।

बिंबोट्ठे बहलं ण देंति मअणं णो गंधतेल्लाविला
वेणीओ विरअंति देंति ण तहा अंगम्मि कुप्पासअं।
जं बाला मुहकुंकुमम्मि वि घणे वट्टंति ढिल्लाअरा
तं मण्णे सिसिरं विणिज्जिअ बला पत्तो वसंतूसवो ॥*॥१३॥

देवी। देव ! अहं वि तुज्झ पडिवड्ढाविआ (त) भविस्सं।
जधा—

छोल्लंति दंतरअणाइं गदे तुसारे
ईसीसि चंदनरसम्मि मण: कुणंति।
एण्हिं सुवंति घरमज्झमसालिआसु
पाअंतपुंजिअपडं मिहुणाइं पेक्ख ॥ † ॥ १४ ॥

* बिम्बोष्ठे बहलं न ददति मदनं नो गन्धतैलाविला
वेणीर्विरचयन्ति ददति न तथाऽङ्गेऽपि कूर्पासकम्।
यत् बाला मुखकुङ्कुमेऽपि घने वर्तन्ते शिथिलादरा:
तन्मन्ये शिशिरं विनिर्जित्य बलात् प्राप्तो वसन्तोत्सव: ॥

† देव ! अहमपि तव प्रतिवर्द्धिका भविष्यामि। यथा—
स्फुरन्ति दन्तरत्नानि गते तुषारे ईषदीषच्चन्दनरसे मन: कुर्वन्ति।
इदानीं स्वपन्ति गृहमध्यमशालिकासु पादान्तपुञ्जितपटं मिथुनानि प्रेक्षस्व ॥

बिम्बोष्ठे इति।—बाला: षोडशवर्षीया: कामिन्य:, "बाला स्यात् षोडशाब्दा तु"। बिम्बोष्ठे बहलं समधिकं मदनं विलेपनविशेषं, शीतजनितव्रणापनयनार्थमिति भाव:, न ददति। गन्धतैलेन सुरभितैलेन आविला वेणी: केशपाशान् नो विरचयन्ति नो विन्यस्यन्ति। तथा अङ्गे शरीरे कूर्पासकमपि कञ्चुलिकामपि, अन्यत् शीताच्छादनं दूरे तिष्ठत्विति भाव:, न ददति। यत् यत: घने सान्द्रे, मुखकुङ्कुमेऽपि शिथिलादरा अनादृता इत्यर्थ:, वर्तन्ते, तत् तस्मात् शिशिरं बलात् विनिर्जित्य पराभूय वसन्तोत्सव: प्राप्त: उपस्थित:, इति मन्ये सम्भावयामि ॥ १३ ॥

(त) देवेति।—प्रतिवर्द्धिका प्रतिवर्द्धयतीति तथोक्ता भविष्यामि, त्वं यथा 'देवि ! वसन्ते अनेन वसन्तारम्भेण' इत्युक्त्वा मां वर्द्धितवान्, अहमपि तद्वर्णनेन तव वर्द्धनं करिष्यामीति भाव:।

[ नेपथ्ये ]।

वैतालिकः। जअ पुव्वदिसंगणाभुअंग! चंपाचंपककण्णऊर! लीलाणिज्जिअराढ़देस! विक्कमक्कंतकामरूअ! हरिकेलीकेलिआरअ! अवमाणिअजच्चसुवण्णवण्ण! सव्वंगमंदरत्तणरमणिज्ज! सुहाअ दे होदु सुरहिसमारंभो। इह हि * (थ)—

* जय पूर्वदिगङ्गनाभुजङ्ग! चम्पाचम्पककर्णपूर! लीलानिर्जितराढदेश! विक्रमाक्रान्तकामरूप! हरिकेलीकेलिकारक! अपमानितजात्यसुवर्णवर्ण! सर्वाङ्गमन्दरत्वरमणीय! सुखाय ते भवतु सुरभिसमारम्भः। इह हि—

---

स्फुरन्तीति।—इदानीं तुषारे शिशिरे गते सति दन्तवस्त्राणि दशनवसनानि स्फुरन्ति विकाशमाप्नुवन्ति, शिशिरजन्यम्लानताविरहादिति भावः। चन्दनरसे तद्विलेपने इति भावः, मिथुनानि द्वन्द्वानि ईषत्स्नेहम् अन्योन्यं यथा तथा मनः कुर्वन्ति। तथा गृहाणां मध्यमशालिकासु मध्यदेशे, न तु अन्तर्गृहे इति भावः, पादान्तेषु चरणान्तेषु पुञ्जिताः सङ्कोचिताः पटाः प्रावरणवसनानि यस्मिन् तत् यथा तथा, स्वपन्ति निद्रान्ति, प्रेयसि पश्य। शिशिरे शीतेन मुखप्रक्षालनाभावात् न दन्तरागः, वसन्ते तु शीतेन मुखप्रक्षालनात् सर्वथा दन्तरागः भवति, अन्योन्यशीतसद्भावात् चन्दनरसे सम्यक्स्पृहानिवृत्तिः, समधिकशीतापगमात् गात्रावरणानां न सम्यक् परिवर्जनं, रात्रिशेषे ईषच्छीतागमात् तन्निवारकवस्त्राणां पदान्तेषु सङ्कोचनादवस्थापनमिति वसन्तधर्म इति भावः॥ १४॥

(थ) जयेति।—पूर्वा दिक् एव अङ्गना कामिनी तस्या भुजङ्गः विटः, "भुजङ्गो विटसर्पयोः" इत्यमरः, तत्सम्बुद्धौ, पूर्वदिक्पते इत्यर्थः। चम्पानाम पूर्वदिग्वर्तिनी नगरी, तस्याः चम्पककर्णपूर, चम्पकपुष्पनिर्मितकर्णभूषणं, तत्सम्बुद्धौ, चम्पानगरीपालक इत्यर्थः। लीलया अवहेलया निर्जितः पराजितः राढदेशः येन तत्सम्बुद्धौ, राढदेशविजेतरित्यर्थः। विक्रमेण आक्रान्तः वशीकृतः कामरूपः तदाख्यदेशः येन सः तत्सम्बुद्धौ, कामरूपाधिपतिरित्यर्थः। हरिकेल्यां तदाख्यदेशे तदाख्यायां कामिन्यां वा केलिकारकः विलासशीलः, तत्सम्बुद्धौ। अपमानितेषु पराजितेष्विति भावः, जात्येषु जातीयेषु, कुलीनेष्वित्यर्थः, सुवर्णः सत्कुलज इत्यर्थः, वर्णः कान्तिर्यश्च तयोः, तत्सम्बुद्धौ, पराजितेषु आढ्येषु कुलीनेषु मध्ये सूर्य इव विराजसि इति भावः, तत्-

पंडीणं गंडवालीपुलअणचवला कंचिवालावलीणं
माणं दो खंडअंता रइरहसअरा लोलचोलप्पिआणं ।
कण्णाडीणं कुणंता विउरतरलणं कुंतलीणं पिएसुं
गुंफंता णेहगंठिं मलअसिहरिणो सीअला वांति वाआ ॥*॥ १५ ॥

( अत्रैव ) ।

द्वितीयः ।—

जादं कुंकुमपंकलीढमरठीगंडप्पहं चंपअं
थोआवट्टिअदुद्धमुद्धकलिआ पप्फुल्लिआ मल्लिआ ।

* पाण्डीनां गण्डपालीपुलकनचपलाः काञ्चीबालावलीनां
मानं द्विः खण्डयन्तो रतिरभसकरा लोलचोलाङ्गनानाम् ।
कर्णाटीनां कुर्वन्तो कुन्तलतरलनं कुन्तलीनां प्रियेषु
गुम्फन्तः स्नेहग्रन्थिं मलयशिखरिणः शीतला वान्ति वाताः ॥

† जातं कुङ्कुमपङ्कलीढमहाराष्ट्रीगण्डप्रभं चम्पकं
स्तोकावर्त्तितदुग्धमुग्धकलिका प्रोत्फुल्ला मल्लिका ।

सम्बुद्धौ । अथवा प्रमाणितं माल्यस्य गुणस्य सुवर्णस्य वर्णेन तत्सम्बुद्धौ । सर्वेषु अङ्गेषु सुन्दरत्वेन रमणीयः मनोहरः तत्सम्बुद्धौ । ते तव सुखाय सुरभिसमारम्भ वसन्तागमः भवतु ।

पाण्डीनामिति ।—पाण्डीनां पाण्डदेशभवानां कामिनीनां गण्डपाल्योः कपोल-तलयोः पुलकने रोमाञ्चने चपलाः प्रवणाः इत्यर्थः, काञ्चीबालावलीनां काञ्चीदेशभव-तरुणीसङ्घानां मानं कान्तेषु कोपं द्विः वारद्वयं, सायं प्रातश्चेति भावः, खण्डयन्तः निरा-कुर्वन्तः, लोलाश्चञ्चलाः याः चोलाङ्गनाः चोलदेशभवाः नार्यः तासां रतौ सुरतोत्सवे रभसकराः वेगकराः, त्वरयन्त इत्यर्थः, कर्णाटीनां कर्णाटदेशीयानाम् अङ्गनानां कुन्तलस्य केशनिचयस्य तरलनं कम्पनं कुर्वन्तः, कुन्तलीनां कुन्तलदेशभवानां रमणीनां प्रियेषु कान्तेषु स्नेहग्रन्थिं प्रणयबन्धनं गुम्फन्तः रचयन्तः, जनयन्त इति यावत्, मलयशिखरिणः मलयाद्रेः शीतलाः वाताः वहन्ति । एतेन अस्य वायोः कामोद्दीपकत्वमुक्तम् ॥ १५ ॥

जातमिति ।—चम्पकं चम्पककुसुमं कुङ्कुमपङ्केन कुङ्कुमद्रवेण लीढः लिप्तः यः महाराष्ट्रीणां महाराष्ट्रदेशभवानाम् अङ्गनानां गण्डः कपोलः तत्प्रभं तत्सवर्णमित्यर्थः,

अवि अ—

माणं मुंचध देह वल्लहजणे दिट्ठिं तरंगुत्तरं
तारुण्णं दिअहाइं पंच दह वा पीणत्थणत्थंभणं।
इत्थं कोइलमंजुसिंजणमिसा देवस्स पंचेसुणो
दिण्णा चित्तमहूसवेण भुअणे आण व्व सव्वंकसा ॥*॥१८॥

विदूषकः। भो! तुम्हाणं सव्वाणं मज्झे अहमेक्को कालक्खरिओ, जस्स मे ससुरस्स ससुरो पंडिअघरे पुत्थिआइं वहंतो आसी। † (च)

* अपि च—

मानं मुञ्चत दत्त वल्लभजने दृष्टिं तरङ्गोत्तरां
तारुण्यं दिवसानि पञ्च दश वा पीनस्तनस्तम्भनम्।
इत्थं कोकिलमञ्जुशिञ्जनमिषात् देवस्य पञ्चेषो-
र्दत्ता चैत्रमहोत्सवेन भुवने आज्ञेव सर्वंकषा ॥

† भोः! युष्माकं सर्वेषां मध्येऽहमेकः कालाक्षरिकः, यस्य मे श्वशुरस्य श्वशुरः पण्डितगृहे पुस्तकानि वहमान आसीत्।

ताम्रपर्णीनाम नदी तस्याः सलिलं यैः तथाभूताः चैत्रानिलाः मधुमासवायवः वान्ति वहन्ति। एतेनास्य वायोः शैत्यसौरभ्यमान्द्यादिगुणाः प्रोक्ताः ॥ १७ ॥

मानमिति।—मानं कोपं, प्रियजनेष्विति भावः, तदुक्तं दर्पणे—"मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः" इति; मुञ्चत त्यजत, वल्लभजने प्रियजने तरङ्गोत्तरां चाञ्चल्य-बहुलां, सतृष्णामिति यावत्, दृष्टिं दत्त। पीनयोः स्तनयोः स्तम्भनं स्थितिर्यस्मात् तत् तारुण्यं यौवनं पञ्च दश वा दिवसानि, अत्यन्तसंयोगे द्वितीया; तिष्ठतीति शेषः, अल्पदिनस्थायीति यावत्। इत्थं कोकिलानां मञ्जु मनोहरं यत् शिञ्जनं रवविशेषः तस्य मिषात् व्याजात् चैत्रमहोत्सवेन वसन्तमहोत्सवेन (कर्त्रा) भुवने जगति देवस्य पञ्चेषोः पञ्चशरस्य कामस्य सर्वंकषा सर्वजनाकर्षिणीत्यर्थः आज्ञेव आदेश इव दत्ता घोषितेति यावत्। अत्र मञ्जुशिञ्जनप्रतिषेधेन आज्ञायाः स्थापनादपह्नुतिः, तदनुप्राणिता आज्ञेवेत्युत्प्रेक्षा इति अनयोः अङ्गाङ्गिभावेन सङ्करः। तदुक्तं दर्पणे—"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः" इति। "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति। "अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ। सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥" इति च ॥ १८ ॥

घंटो। [विहस्य]। तदो आगदं दे अण्णएण पंडित्तणं।* (ङ)

विदूषकः। [सक्रोधम्]। आः दासीए धीए! भविस्स-कुट्टणि! (च) णिल्लक्खणे! अविअक्खणे! ईरिसोऽहं मुक्खो जो तुए वि उवहसिज्जामि? अण्ण च, हे परपुत्तविट्टालिणि! रच्छा-लोट्टणि! भमलटेंटे! टेंटाकराले! कोसमदापहारिणि! दुट्ठ-संघडिदे! अहवा हत्थकंकणं किं दप्पणेण पेक्खीअदि? † (छ)

विचक्खणा। [विभाव्य]। एव्व णेदं, तुरगस्स सिग्घत्तणे किं साक्खिणो पुच्छीअंति? (ज) ता वस्सअ वसतअं। ‡

* तत आगतं ते अन्वयेन पाण्डित्यम्।

† आः दास्याः पुत्रि! भविष्यत्कुट्टनि! निर्लक्षणे! अविचक्षणे! ईदृशोऽहं मूर्खो यस्त्वयाऽप्युपहस्ये? अन्यच्च, हे परपुत्रविट्टालिनि! रथ्यालुण्ठिनि! भ्रमरटेण्टे! टेण्टाकराले! कोषमतापहारिणि! दुष्टसङ्घटिते! अथवा हस्तकङ्कणं किं दर्पणेन दृश्यते?

‡ एवमेतत्, तुरङ्गस्य शीघ्रत्वे किं साक्षिणः पृच्छ्यन्ते? तद्वर्णय वसन्तम्।

(घ) अकर्मकः कालाक्षरिकः कालेन अक्षरिकः अक्षरं जानातीति अक्षरिकः बहुकालानुशीलनेन अक्षरमात्राभिज्ञ इति भावः।

(ङ) अन्वयेन कुलपरम्परयेत्यर्थः।

(च) भविष्यत्कुट्टनि! भविष्यन्ती कुट्टनी परपुरुषेण सह परस्त्रियाः समागम-कारिणी, तत्सम्बुद्धौ।

(छ) अन्यच्चेति।—परपुत्रविट्टालिनि! परसुतविभ्रंशिनीत्यर्थः, परपुरुषसङ्गिनीति यावत्। रथ्यालुण्ठिनि! रथ्यायां पथि लुण्ठति पतति, या सुरापानादिनेति भावः, सा रथ्यालुण्ठिनी तत्सम्बुद्धौ। भ्रमरटेण्टे! भ्रमरवत् मधुलोभेन इतस्ततः सञ्चारिणि! टेण्टाकराले! कलहप्रिये! कोषमतापहारिणि! परधनसमूहलुण्ठिनि! दुष्टसङ्घटिते! दुष्टं सङ्घटितं सङ्गः यस्याः तथोक्ता तत्सम्बुद्धौ कुसङ्गिनीत्यर्थः। अथवा पक्षान्तरे, हस्तकङ्कणं हस्तस्थितं कङ्कणं सुवर्णवलयः दर्पणेन मुकुरेण किं दृश्यते? नैवेत्यर्थः। मम चरितं सर्वैरेव ज्ञातं किं वर्ण्यते? इति भावः।

विचक्षणा। णिअकन्तावत्थजोग्गं दे वअणं।*

विदूषकः। ता उआरवअणे ! तुमं पढ।† (ट)

देवी। (किञ्चित् स्मित्वा)। सहि विअक्खणे ! अम्हाणं पुरदो तुमं गाढं कइत्तणेण उत्ताणा होसि; ता पढ संपदं अज्जउत्तस्स पुरदो सअंकिदं किंपि कव्वं, जदो तं कव्वं जं सहाए पढीअदि, तं सुवण्णं जं कसवट्टए णिव्वडेदि, सा घरिणी जा पिअं रंजेदि, सो पुत्तो जो कुलं उज्जलेदि।‡ (ठ)

विचक्षणा। जं देवी आणवेदि।§ [पठति]।—

जे लंकागिरिमेहलाहि खलिदा संभोअखिण्णोरई-

फारप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं।

---

* निजकान्तावस्थायोग्यं ते वचनम्।

† तत् उदारवचने ! त्वं पठ।

‡ सखि विचक्षणे ! अस्माकं पुरतस्त्वं गाढं कवित्वेन उत्ताना भवसि; तत् पठ साम्प्रतमार्यपुत्रस्य पुरतः स्वयं-कृतं किमपि काव्यम्; यतः तत् काव्यं यत् सभायां पठ्यते, तत् सुवर्णं यत् कषपट्टिकायां निवर्तते, सा गृहिणी या पतिं रञ्जयति, स पुत्रो यः कुलमुज्ज्वलयति।

§ यत् देवी आज्ञापयति।—

ये लङ्कागिरिमेखलायाः स्खलिताः सम्भोगखिन्नोरगी-

स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्

---

बकुलाः प्रियाः। किञ्च गान्धितस्य आवासितस्य मल्लिकोद्गमस्य मञ्जुलाः सङ्गताः ईं मुग्धाः मनोहराः विचकिलानां तदाख्यतरूणां प्रसूनपुञ्जाः पुष्पपुञ्जाः, ते च, बकुलाः इत्यनेनान्वयः ॥ १९ ॥

(ट) तर्हीति।—तत् तर्हि, हे उदारवचने ! प्रियसखि ! 'निजकान्तावस्थायोग्यं ते वचनम्' इत्युक्तं स्वकान्तविषयं वचनं निशम्य विदूषकस्य विचक्षणायामादरातिशयाय सम्बोधनमिदम्।

(ठ) पुरतः अग्रतः। कवित्वेन काव्यरचनापटुत्वेन। उत्ताना प्रगल्भा अर्थात् दृप्तेति यावत्। काव्यं कविकृतम् अलौकिकं चमत्कारि वाक्यम्। कषपट्टिकायां निकषोपले निवर्तते परीक्षार्थं घृष्यते, परीक्षया शुद्धाशुद्धतायां निर्णीतं भवतीत्यर्थः।

ते एण्हिं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥§॥२०॥

राजा। सच्चं विअक्खणा विअक्खणा चदुरत्तणेण उत्तिणं, ता किमस्सं कइणं वि कई। * (ड)

देवी। [विहस्य]। कइचूड़ामणित्तणेण ट्ठिदा एसा। †

विदूषकः। [सक्रोधम्]। ता उज्जुअं (ढ) ज्जेव्व किं ण भणीअदि देवीए, अच्चुत्तमा विअक्खणा कव्वम्मि, अच्चधमो कविंजलबम्हणो त्ति ? ‡

त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहला तारुण्यपूर्णा इव ॥

* सत्यं विचक्षणा विचक्षणा चतुरत्वेनोक्तीनाम् ; तत् किमन्यत् कवीनामपि कविः।

+ कविचूडामणित्वेन स्थिता।

‡ तत् ऋजु एव किं न भण्यते देव्या, अत्युत्तमा विचक्षणा काव्ये, अत्यधमः कपिञ्जलब्राह्मण इति ?

ते इति।—ये मलयानिलाः लङ्कागिरेः लङ्कास्थितपर्वतस्य मेखलायां नितम्बे स्खलिताः पतिताः, व्याहता इति भावः, तथा सम्भोगेन खिन्नानां श्रान्तानाम् उरगीणां भुजङ्गीनां स्फाराभिः विशालाभिः उत्फुल्लाभिः विकासं गताभिः, उन्नमिताभिरिति भावः, फणावलीभिः कवलने ग्रसने, भक्षणे इति यावत्, दरिद्रत्वं क्षीणत्वमित्यर्थः प्राप्ताः, ते इदानीं विरहिणीनां निःश्वासेन दीर्घेणेति भावः, सम्पर्कः सङ्गः तद्वन्तः सन्तः झटिति शीघ्रं शिशुत्वेऽपि शैशवेऽपि, अल्पमात्रायामपीति भावः, तारुण्येन यौवनेन पूर्णा इव जाताः क्रमशः प्रबला इति भावः। अत्र तारुण्यपूर्णा इवेति हेतूत्प्रेक्षया शिशुत्वापगमहेतुकस्य यौवनस्य तस्सत्त्वेऽपि सत्त्या विभावना। यौवनागमहेतौ शैशवे सत्यपि तत्फलस्य यौवनागमनस्याभावात् विशेषोक्तिश्च इत्येतासामङ्गाङ्गिभावेन सङ्करः। तदुक्तं दर्पणे—"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते" इति। "सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा" इति च ॥ २० ॥

(ड) विअक्खणा विदुषी। चदुरत्तेण नैपुण्येन। उत्तीणं भारतीनाम्। किमस्सं अन्यत् किं वक्तव्यमित्यर्थः।

विअक्खणा। अज्ज! मा कुप्प. कव्वं ज्जेव्व कइत्तणं पिसुणेदि, जदो णिअकंतारंजणजोग्गं णिओदरभरित्तणं। णिंदणिज्जो वि अत्थे सुउमारा दे वाणी लंबत्थणीए विअ एक्कावली, तुंदिल्लाए विअ कंचुलिआ, टेराए विअ कडक्खविक्खेवो, कट्टिदकेसाए विअ मालदीकुसुममाला, काणाए विअ कज्जलसलाआ ण सुट्ठुदरं भादि रमणिज्जा। * (ण)

विदूषकः। तुज्झ उण रमणिज्जोऽवि अत्थे ण सुंदरा सद्दावली कणअकडिसुत्तए विअ लोहकिंकिणीमाला, पडिवट्टे विअ टसरविरअणा, गोरंगीए विअ चंदणचच्चा ण चारुत्तणमवलंबेदि। तहा वि तुमं वण्णीअसि। † (त)

---

* आर्ये! मा कुप्य, काव्यमेव कवित्वं पिशुनयति, यतो निजकान्तारञ्जनयोग्यं निजोदरभरित्वम्। निन्दनीयेऽप्यर्थे सुकुमारा ते वाणी लम्बस्तन्या इव एकावली, तुन्दिलाया इव कञ्चुलिका, टेराया इव कटाक्षविक्षेपः, कर्तितकेशाया इव मालतीकुसुममाला, काणाया इव कज्जलशलाका न सुष्ठुतरं भाति रमणीया।

† तव पुनः रमणीयेऽप्यर्थे न सुन्दरी शब्दावली कनककटिसूत्र इव लोहकिङ्किणीमाला, प्रतिपट्ट इव टसरविरचना, गौराङ्ग्या इव चन्दनचर्चा न चारुत्वमवलम्बते। तथाऽपि त्वं वर्ण्यसे।

---

(ठ) ऋजु सरलं, स्पष्टमिति यावत्।

(ण) कवित्वं पाण्डित्यम्। पिशुनयति सूचयति। निजेति।—निजकान्ताया न तु अन्यस्या इति भावः, रञ्जनयोग्यं मनोविनोदं निजोदरभरित्वं स्वोदरपूरकत्वम्। निन्दनीयेऽपि वाच्ये इति भावः। एकावली एकसरो मुक्ताहारः। तुन्दिलायाः स्थूलोदर्याः। कञ्चुलिका "काचुलि" इति प्रसिद्धा। टेरायाः केकरायाः, "टेरा" इति प्रसिद्धाया इत्यर्थः; देशी भाषेयम्।

(त) न सुन्दरी न मनोहारिणी। कनककटिसूत्रे इव काञ्चनकटिबन्धसूत्रे इव लोहकिङ्किणीमाला लोहनिर्मितक्षुद्रघण्टिकावली। प्रतिपट्ट इव पट्टवस्त्रे इव टसरविरचना कर्पासनिर्माणम्, अथवा (SHUTTLE) 'ताकमो' नामकतन्तुवाययन्त्रभेदेन विरचना टसरविरचना। चारुत्वं मनोहारित्वम्। तथाऽपि इयं विदग्ध-

विचक्षणा। अज्ज! मा कुप्प; का तुम्हेहिं सह पडिप्पद्धा? जदो तुमं णाराओ विअ णिरक्खरो वि रअणतुलाए णिउंजीअसि। अहं उण तुले व्व लद्धक्खरा वि ण सुवण्णभंडे णिउंजीआमि। * (थ)

विदूषकः। एव्वं मह भणंतीए तुह वामं दक्खिणं अ जुहिट्ठिरजेट्ठभाआरणामहेअं अंगजुअलं उप्पाडइस्सं। † (द)

विचक्षणा। अहं वि उत्तरफग्गुणीपुरस्सरणक्खत्तणामहेअं अंगं तुह झत्ति खंडइस्सं। ‡ (ध)

---

* आर्य! मा कुप्य। का युष्माभिः सह प्रतिस्पर्द्धा? यतस्त्वं नाराच इव निरक्षरोऽपि रत्नतुलायां नियुज्यसे। अहं पुनस्तुलेव लब्धाक्षराऽपि न सुवर्णभाण्डे विनियुज्ये।

† एवं मम भणन्त्यास्तव वामं दक्षिणं च युधिष्ठिरज्येष्ठभ्रातृनामधेयमङ्गयुगल-मुत्पाटयिष्यामि।

‡ अहमपि उत्तरफल्गुनीपुरःसरनक्षत्रनामधेयमङ्गं तव झटिति खण्डयिष्यामि।

---

रत्नविज्ञत्वेऽपीत्यर्थः, त्वं वर्ण्यसे प्रशस्यसे, कवित्वेनेति भावः, लोकैरिति शेषः, आश्चर्यमेतदिति भावः।

(थ) प्रतिस्पर्द्धा प्रतिद्वन्द्वं, समेति शेषः, न सम्भवतीति भावः। नाराच इव लौहशलाकेव। निरक्षरोऽपि अक्षरमात्रानभिज्ञोऽपि मूर्खोऽपीत्यर्थः, रत्नतुलायां— "जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तः तव ब्राह्मणत्वेन उत्कृष्टजातित्वात् रत्नसाम्य नियुज्यसे निश्चीयसे, पूज्यसे लोकैरिति भावः। नाराचो हि रत्नपरीक्षणे उपयुज्यते इति तत्साम्यमवधेयम्। तुलेव तोलनदण्ड इव, 'निक्ति' इति भाषा, लब्धाक्षराऽपि पण्डिताऽपीत्यर्थः, सुवर्णभाण्डे शोभनानां वर्णानां ब्राह्मणादीनां भाण्डे पात्रतायामिति यावत, स्वस्य दासीत्वादिति भावः। तुला तु सुवर्णस्य तोलनात् परं न केनापि आद्रियते इति भावः।

(द) युधिष्ठिरज्येष्ठभ्रातृनामधेयं युधिष्ठिरस्य ज्येष्ठो भ्राता कर्णः, तन्नामधेयं तदाख्यम् अङ्गयुगलं कर्णद्वयम्।

राजा। वअस्स! मा एव्वं भण, कइत्तणे ट्ठिदा एसा।*

विदूषकः। [सक्रोधम्]। उज्जुअं ता किं ण भणइ, अम्हाणं चेडिआ हरिअंद-णंदिअंद-कोट्टिसहालप्पहुदीणं वि पुरदो सुकइ त्ति? †

राजा। एव्वं एदं। ‡

विदूषकः। [सक्रोधं परिक्रामति]।

विचक्षणा। तहिं गच्छ जहिं मे पढमा साडिआ गदा। § (न)

विदूषकः। [वलितग्रीवम्]। तुमं उण तहिं गच्छ, जहिं मे मादाए पढम दंतावली गदा। (प) ईदिसस्स राअउलस्स भद्दं भोदु, जहिं चेडिआ बह्मणेण समं समसीसिआए (फ) दीसदि। मइरा पंचगव्वं च एक्कस्सिं भंडए कीरदि, कच्चं माणिक्कं च समं आहरणे पउंजीअदि। ¶ (ब)

* वयस्य! मैवं भण, कवित्वमते स्थितैषा।

† ऋजुकं तत् किं न भण्यते, अस्माकं चेटिका हरिचन्द्र-नन्दिचन्द्र-कोटिशहाल-प्रभृतीनामपि पुरतः सुकविरिति?

‡ एवमेतत्।

§ तत्र गच्छ, यत्र मे प्रथमा शाटिका गता।

¶ त्वं पुनस्तत्र गच्छ यत्र मे मातुः प्रथमा दन्तावली गता। ईदृशस्य राजकुलस्य भद्रं भवतु, यत्र चेटिका ब्राह्मणेन समं समशीर्षिकया दृश्यते, मदिरा पञ्चगव्यं चैकस्मिन् भाण्डे क्रियते, काचं माणिक्यं च सममाभरणे प्रयुज्यते।

(ध) रणरणन्नुपुर-घरणरणायमानचरणं ध्वन्याक्षिपत्यत्र: । ब्रुवडविष्यामि मयं करिष्यामीत्यर्थः ।

(न) शाटिका वसनं, गता छिन्नत्वं,विनाशं गतेति यावत्, तं म्रियस्वेति भावः।

(प) वलितग्रीवं वक्रीकृत-कन्धरम्। दन्तावली दन्तपंक्ति गता पतितेत्यर्थः, त्वमपि म्रियस्वेति भावः।

(फ) समशीर्षिकया प्रतिस्पर्द्धयेत्यर्थः।

चेटी। इह राअउले तं ते भोदु कंठट्ठिदं, जं भअवं तिलोअणो सीसे समुव्वहदि, तेण च ते मुहं चूरीअदु जेण असोअतरू दोहदं लहदि। * (भ)

विदूषकः। आः! दासीए पुत्ति! टेंटाकराले! कोसअद-वंचणि! रच्छालोट्टणि! एव्वं मं भणसि? ता मह महबम्हणस्स भणिदेण तं तुमं लहस्सु, जं फग्गुणसमए सोहंजणो जणादो लहदि, जं पामराहिंतो वइल्लो लहदि। † (म)

विचक्षणा। अहं उण तुह एव्वं भणंतस्स पोट्टरस्स विअ

* इह राजकुले तत्ते भवतु कण्ठस्थितं, यत् भगवांस्त्रिलोचनः शीर्षे समुद्वहति। तेन च ते मुखं चूर्ण्यतां, येनाशोकतरुर्दोहदं लभते।

‡ आः दास्याः पुत्रि! टेण्टाकराले! कोशशतवञ्चनि! रथ्यालुण्ठिनि! एवं मां भणसि? तस्मात् महाब्राह्मणस्य भणितेन तत् त्वं लभस्व, यत् फाल्गुनसमये शोभाञ्जनो जनाल्लभते, यत् पामरेभ्यो बलीवर्दो लभते।

(ब) पञ्चगव्य पञ्चानां गव्यानां गोमयानां वस्तूनां दधिदुग्धघृतगोमयगोमूत्राणामित्यर्थः समाहारः पञ्चगव्यं विशुद्धमशुद्धशोधकञ्च द्रव्यमिति भावः।

(भ) शीर्षं शिरसि, भाले इत्यर्थः, अर्द्धचन्द्रमिति यावत्। तत्ते कण्ठस्थितं भवतु तव गले अर्द्धचन्द्राकारेण हस्तं दत्त्वा निष्कासनं भवत्विति निष्कर्षः। तेन पदाघातेनेति भावः। अशोकतरुः दोहदं गमं लभते विकसतीति भावः। "पादाहतः प्रमदया विकसत्यशोकः" इति कविसमयप्रसिद्धेरिति भावः।

(म) कोषशतानि धनजातानि वञ्चयतीति तथोक्ता तत्सम्बुद्धौ, परपुरुषान् वञ्चयित्वा धनसमूहहारिणीत्यर्थः। अन्यत् व्याख्यातं प्राक्। महाब्राह्मणस्येत्यादि।— महतः ब्राह्मणस्य अधम ब्राह्मणापसदस्य, "शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति निषेधेन निन्दाश्रवणादिति भावः। भणितेन वचनेन। यत् फाल्गुनसमये फाल्गुने मासि शोभाञ्जनः वृक्षविशेषः "सजना" इति प्रसिद्धः, जनात् यत् लभते शाखाच्छेदनमिति भावः। बलीवर्दस्य पुङ्गवस्य पामरेभ्यः दुर्जनेभ्यः यत् नासाच्छेदनरूपमिति भावः, लभते तत् त्वं लभस्व तव हस्तौ नासाञ्च लोकः छिनत्तु इति भावः।

पाअलग्गस्स पाएण मुहं चूरइस्सं। (य) अण्णं च, उत्तरासाढापुरस्सरणक्खत्तणामहेअं अंगजुअलं उप्पाडिअ घालिस्सं। * (र)

विदूषकः। [ सक्रोधं परिक्रामन्, जवनिकान्तरे (ल) विचिट्ठदे. ]।

ईदिसं राअउलं दूरे वज्जीअदि, जहिं दासी बम्हणेण समं पड़िप्पद्धां करेदि। ता अज्ज प्पहुदि णिअगेहिणीए वसुंधराणामहेआए बम्हणीए चलणसुस्सूसणो भविअ गेहे जेव्व चिट्ठिस्सं। † (व)

[ सर्वे हसन्ति ]।

देवी। अज्जउत्त! कीदिसी कविंजलेण विणा गोट्ठी? कीदिसी णअणांजणेण विणा पसाहणलच्छी?। ‡ (श)

---

* अहं पुनस्तवैवं भवतो नूपुरस्येव पादलग्नस्य पादेन मुखं चूर्णयिष्यामि। अन्यच्च, उत्तराषाढापुरःसरनक्षत्रनामधेयमङ्गयुगलमुत्पाट्य क्षेप्स्यामि।

† ईदृशं राजकुलं दूरे वर्ज्यतां, यत्र दासी ब्राह्मणेन समं प्रतिस्पर्द्धां करोति। तदद्य प्रभृति निजगेहिन्या वसुन्धरानामधेयाया ब्राह्मण्याश्चरणशुश्रूषुर्भूत्वा गेह एव स्थास्यामि।

‡ आर्य्यपुत्र! कीदृशी कपिञ्जलेन विना गोष्ठी? कीदृशी नयनाञ्जनेन विना प्रसाधनलक्ष्मीः?।

---

(य) अहमिति।—एवं भवतः कथयतः पादलग्नस्य चरणसंलग्नस्य नूपुरस्येव व्यर्थप्रलापिन इति भावः।

(र) अन्यच्च अपरञ्च उत्तराषाढायाः पुरःसरम् अग्रवर्त्ति यत् नक्षत्रं श्रवणेति यावत्, तन्नामधेयं तदाख्यमित्यर्थः, अङ्गयुगलं कर्णद्वयमित्यर्थः, उत्पाट्य छित्त्वा। "अन्यच्च ते पवननिष्क्रमणोत्क्रमणविवरस्थानमङ्गं खण्डयित्वा क्षेप्स्यामि" इति पाठे—पवनस्य वायोः निःश्वासवतः निष्क्रमणं निःसरणम् उच्छ्वासवतः उत्क्रमणम् आकर्षणं, तयोर्विवरस्थानम् अङ्गं नासिकामित्यर्थः। खण्डयित्वा छित्त्वेत्यर्थः।

(ल) जवनिकान्तरे जवनिका तिरस्करिणी तस्याः अन्तरम् अभ्यन्तरं तस्मिन्।

(व) ईदृशमिति।—यत्र दासी ब्राह्मणेन समं सह प्रतिस्पर्द्धां प्रतिपक्षतां करोति, ईदृशं राजकुलं दूरे वर्ज्यतां परिहीयतां, परित्यज्यतामित्यर्थः, अस्माभिरिति शेषः।

जं जादि खंजिदतुरंगरहो दिणेसो
तेणेव्व होंति दिअहा अइदीहदीहा ॥ * ॥ २१ ॥

[ प्रविश्याऽपटीक्षेपेण ] ( ङ )

विदूषकः। आसणमासणं। †

राजा। किं तेण? ‡

विदूषकः। भैरवाणंदो आअच्छदि। §

देवी। किं सो, जो जणवअणादो अच्चब्भुदसिद्धी सुणीअदि? ¶

विदूषकः। अध इं। **।

राजा। पवेसअ। ††

* गायन्तीषु वधूपदप्रेङ्खितासु
दोलासु विभ्रमवतीषु निषण्णदृष्टिः।
यद्याति खञ्जिततुरङ्गरथो दिनेशः
तेनैव भवन्ति दिवसा अतिदीर्घदीर्घाः ॥

† आसनमासनम्।

‡ किं तेन?

§ भैरवानन्द आगच्छति।

¶ किं सः, यो जनवचनादत्यद्भुतसिद्धिः श्रूयते?

** अथ किम्।

†† प्रवेशय।

गायदिति।—गायन्तीनां गोपवधूनां दोलारूढानामिति भावः, पदेश्वरणैः प्रेङ्खितासु आन्दोलितासु विभ्रमवतीषु विलासवतीषु, मनोहारिणीष्विति भावः, दोलासु निषण्णा निविष्टा दृष्टिर्यस्य तथाभूतः दिनेशः सूर्यः खञ्जिताः तुरङ्गा यस्य तथाविधः रथो यस्य तथोक्तः सन् यत् याति भुवनं परिक्रामतीत्यर्थः, तेनैव हेतुना दिवसाः अतिदीर्घदीर्घाः अतिदूरन्त इत्यर्थः, भवन्ति। मम तु विषयच्छाया विभ्रमे दत्तदृष्टेः कपिञ्जलं विना खञ्जितत्वं स्यात्, तेन च दिवसातिवाहनमतीव क्लेशावहं भविष्यतीति कपिञ्जलः आदरेणानीयतामिति व्यज्यते। २१।

(ङ) अपटीक्षेपेण जवनिकाऽपसारणमन्तरेणैव।

[ विदूषको निष्क्राम्य तेनैव सह प्रविशति ]।

भैरवानन्दः। [ किञ्चिन्मदमभिनीय पठति ]। (क)—

मंतो ण तंतो ण अ किं पि जाणं
झाणं च णो किं पि गुरुप्पसादा।
मज्जं पिआमो महिलं रमामो
मोक्खं च जामो कुलमग्गलग्गा॥ * ॥ २२ ॥

अवि अ—

रंडा चंडा दिक्खिदा धम्मदारा
मज्जं मंसं पिज्जए खज्जए अ।
भिक्खा भोज्जं चम्मखंडं च सेज्जा
कोलो धम्मो कस्स णो भादि रम्मो ? † ॥ २३ ॥

---

मन्त्रो न तन्त्रं न च किमपि ज्ञानं
ध्यानञ्च नो किमपि गुरुप्रसादात्।
मद्यं पिबामो महिलां रमयामो
मोक्षञ्च यामः कुलमार्गलग्नाः॥

अपि च—

रण्डा चण्डा दीक्षिता धर्मदारा
मद्यं मांसं पीयते खाद्यते च।
भिक्षा भोज्यं चर्मखण्डञ्च शय्या
कौलो धर्मः कस्य नो भाति रम्यः ?॥

---

(क) मदं मद्यम् अभिनीय अभिनयेन पौल्हेवेत्यर्थः।

मन्त्र इति।—मन्त्रो न तन्त्रं किञ्चिदपि शास्त्रञ्च न किमपि ज्ञानं किमपि ध्यानञ्च समाधिश्च नो, अस्तीति शेषः, गुरोराचार्यस्य प्रसादात् मतानुसारेणेति भावः, कुलमार्गे कुलाचारे लग्नाः रताः सन्तः मद्यं सुरां पिबामः, महिलां कान्तां, परस्त्रीयामिति भावः, रमयामः, मोक्षं मुक्तिं यामः गच्छामश्च, अस्माकं मद्यस्त्रीसम्भोगेनैव मुक्तिरिति कौलिकमतमिति भावः॥ २२॥

रण्डेति।—रण्डा विधवा, चण्डा प्रचण्डा, दीक्षिता तान्त्रिकदीक्षायुक्ता, एता भार्याः धर्मदाराः धर्मपत्न्यः, अस्माकमिति शेषः। मद्यं पीयते मांसं खाद्यते च, अस्माभिरिति

किं च—

मुत्तिं भणंति हरिबम्हमुहादिदेवा
झाणेण वेअपढणेण कदुक्किआए।
एक्केण केवलमुमादइएण दिट्ठो
मोक्खो समं सुरअकेलिसुरारसेहिं॥ * ॥ २४ ॥

राजा। एदं आसणं, उपविसदु भैरवाणंदो। †

भैरवानन्दः। [उपविश्य]। किं कादव्वं? ‡ (ख)

राजा। कहिं वि विसए अच्चरिअं दिट्ठुमिच्छामि। §

भैरवानन्दः।—

दंसेमि तं पि ससिणं वसुहावतिण्णं
थंभेमि तस्स वि रविस्स रहं णहद्धे।

* किञ्च—
मुक्तिं भणन्ति हरिब्रह्ममुखादिदेवा
ध्यानेन वेदपठनेन क्रतुक्रियाभिः।
एकेन केवलमुमादयितेन दृष्टो
मोक्षः समं सुरतकेलिसुरारसैः॥

† इदमासनम्, उपविशतु भैरवानन्दः।

‡ किं कर्त्तव्यम्?

§ कस्मिन्नपि विषये आश्चर्यं द्रष्टुमिच्छामि।

¶ दर्शयामि तमपि शशिनं वसुधावतीर्णं
स्तम्भयामि तस्यापि रवी रथं नभोऽर्धे।

शेषः, भिक्षा याज्ञालब्धं द्रव्यमित्यर्थः, भोज्यं भक्ष्यं, चर्मखण्डं शय्या च, कलत्रमिति शेषः। एषः कौलः कुलक्रमागतो धर्मः आचारः कस्य जनस्य रम्यः प्रियः नो भाति? अपि तु सर्वस्यैव रम्य एष धर्म इत्यर्थः॥ २३॥

मुक्तिमिति।—हरिब्रह्ममुखा विष्णुविरिञ्चिप्रभृतयः देवा हि केवलं ध्यानेन समाधिना वेदपठनेन श्रुतिपाठेन क्रतुक्रियाभिः यज्ञानुष्ठानैश्च मुक्तिं भणन्ति मुक्तिर्भवतीति वदन्ति। केवलम् एकेन उमापतिदयितेन ईश्वरेण हरेण सुरतकेलिभिः सुरारसैः मद्योपयोगैश्च समं मोक्षो दृष्टः सुरत-सुरासेवनेनैव मोक्ष उपदिश्यते इति भावः॥ २४॥

(ख) कर्त्तव्यं कार्यम्? तवेप्सितमिति शेषः।

आणेमि जक्खसुरसिद्धगणंगणाओ
तं णत्थि भूमिवलए मह जं ण सज्झं ॥ २५ ॥ ¶

ता भण किं करीअदु ? *

राजा। वअस्स ! तुए कहिं पि अपुव्वं दिट्ठं महिला रअणं ? † (ग)

विदूषकः। दिट्ठं दाव। ‡

राजा। कहेहि। §

विदूषकः। अत्थि एत्थ दक्खिणावहे वेदब्भं णाम णअरं, तहिं मए एक्कं कण्णारअणं दिट्ठं, तमिह आणीअदु। ¶

भैरवानन्दः। आणीअदि। **

---

आनयामि यक्षसुरसिद्धगणाङ्गना:
तन्नास्ति भूमिवलये मम यन्न साध्यम् ॥

तद्भण किं क्रियताम् ?

† वयस्य ! त्वया कुत्रापि अपूर्वं दृष्टं महिलारत्नम् ?

‡ दृष्टं तावत्।

§ कथय।

¶ अस्ति अत्र दक्षिणापथे वैदर्भं नाम नगरं, तत्र मयैकं कन्यारत्नं दृष्टं, तदिह आनीयताम्।

** आनीयते।

दर्शयामीति।—तं प्रसिद्धं अहिमं चन्द्रमपि वसुधायां पृथिव्याम् अवतीर्णम् अवहं दर्शयामि। नभोऽध्वनि आकाशमार्गे तत्र प्रतिबद्धस्य रवेः सूर्य्यस्यापि रथं स्तम्भामि संस्तम्भयामीत्यर्थः। अन्तर्भूतण्यर्थः। यक्षसुरसिद्धगणानाम् अङ्गनाः कामिनीः आनयामि। यत् मम साध्यं न, तत् भूमिवलये भूमण्डले नास्ति, सर्वमेव मम साध्यमित्यर्थः ॥ २५ ॥

(ग) वयस्येति।—विदूषकं प्रति सम्बोधनमेतत्। महिलारत्नं स्त्रीरत्नम्, उत्तमा स्त्रीति यावत्। "जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तेः।

राजा। ओदारीअदु पुण्णिमाहरिणंको धरणीअले। * (घ)

[ भैरवानन्दो ध्यानं नाटयति ]।

[ ततः प्रविशति पटाक्षेपेण ( ङ ) नायिका। सर्वे आलोकयन्ति ]।

राजा। अहह ! अच्चरिअं ! अच्चरिअं ! ।—

जं धोअंजणसोणलोअणजुअं लग्गालअग्गं मुहं
हत्थालंबिदकेसपल्लवचए दोलंति जं बिंदुणो।
जं एक्कं सिचअंचलं णिवसिदं तं ण्हाणकेलिट्ठिदा
आणीदा इअमब्भुदेक्कजणणी जोईसरेणामुणा ? ॥†॥२६॥

अवि अ—

एक्केण पाणिणलिणेण णिवेसअंती
वत्थंचलं घणथणत्थलसंसमाणं।

अवतार्यतां पूर्णिमाहरिणाङ्को धरणीतले।

† अहह ! आश्चर्यम् ! आश्चर्यम् ! ।—

यत् धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये दोलायन्ते यद्बिन्दवः।
यदेकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना ? ॥

(घ) अवतार्यतामिति।—पूर्णिमाहरिणाङ्कः पूर्णचन्द्र इत्यर्थः, तदेव कन्यारत्नमिति भावः।

(ङ) पटाक्षेपेण पटस्तिरस्करिणी तस्य आक्षेपेण अपसारणेन।

यदिति।—यत् यतः धौतम् अञ्जनं कज्जलं यस्य तथोक्तम्, अत एव शोणं रक्तं लोचनयुगं नयनयुगलं यस्मिन् तथाविधं, तथा लग्नानि सक्तानि अलकाग्राणि कुन्तलाग्रभागाः यस्मिन् तथाभूतं मुखम्। यत् यतः हस्तेन आलम्बितः गृहीतः केशानां पल्लवचयः प्रान्तनिचयः तस्मिन् बिन्दवः, जलानामिति शेषः, दोलायन्ते कम्पन्ते इत्यर्थः। यत् यतः एकम् न द्वितीयम्, उत्तरासङ्गवर्जनादिति भावः, सिचयस्य वसनस्य परिधेयस्य अञ्चलं निवसितम् आच्छादितं, तत् तस्मात् इयं स्नानकेलौ स्नानक्रीडायां स्थिता अद्भुतैकजननी चमत्कारहेतुभूता, विस्मयजननीत्यर्थः, इयमस्मदेति भावः, कुत्रेति

चित्ते लिहिज्जदि ण कस्स वि संजमंतो
अण्णेण चंकमणदो चलिदं कडिल्लं ? * ॥ २७ ॥

विदूषकः।—

ण्हाणावमुक्काभरणोच्चआए तरंगभंगक्खदमंडणाए।
आद्दंसुओल्लाणिअणूलदाए सुंदेरसव्वस्समिमीअ दिट्ठी ॥ † ॥ २८ ॥

नायिका। [सर्वानवलोक्य स्वगतम्]। एसो महाराओ को वि इमिणा गंभीरमहुरेण सोहासमुदाएण जाणिज्जदि। एसा वि एदस्स महादेवी तक्कीअदि अद्धणारीसरस्स विअ अकलिदा वि गोरी। एसो को वि जोईसरो। एस उण परिअणो। [विचिन्त्य]। ता किं ति एदस्स महिलासहिदस्स दिट्ठी मं बहु मण्णेदि ? ‡ (च)। [इति वक्तं योजयते]।

---

* अपि च—

एकेन पाणिनलिनेन निवेशयन्ती
वस्त्राञ्चलं घनस्तनस्थलसंलग्नम्।
चित्ते लिख्यते न कस्यापि संयच्छन्ती
अन्येन चङ्क्रमणतश्चलितं कटिवस्त्रम् ? ॥

† स्नानावमुक्ताभरणोच्चयायास्तरङ्गभङ्गक्षतमण्डनायाः।
आर्द्रांशुकोल्लासितनुलतायाः सौन्दर्यसर्वस्वमस्या दृष्टिः ॥

‡ एष महाराजः कोऽप्यनेन गम्भीरमधुरेण शोभासमुदायेन ज्ञायते। एषाऽपि

---

शेषः, अमुना योगीश्वरेण भैरवानन्देन आनीता ? स्नानार्द्रशिरस्कारः, स्नानविधेः असमाप्तत्वात् ॥ २६ ॥

एकेनेति।—एकेन पाणिनलिनेन करपङ्कजेन घनाभ्यां निबिडाभ्यां स्तनस्थलाभ्यां संलग्नं विलग्नं वस्त्राञ्चलं निवेशयन्ती स्थापयन्ती गच्छन्तीत्यर्थः, अन्येन पाणिनलिनेन चङ्क्रमणतः पुनः पुनश्चलनात् चलितं स्खलितं कटिवस्त्रं संयच्छन्ती बध्नती, इयमिति शेषः, कस्य जनस्य चित्ते पटभूते इति भावः, नापि लिख्यते ? नैव चित्र्यते ? अपि तु सर्वस्यैव चित्तपटे आलिख्यत एवेत्यर्थः ॥ २७ ॥

स्नानेति।—स्नानकाले अवमुक्तः परित्यक्तः आभरणोच्चयः अलङ्कारनिवहः यया

विदूषकः। अहो ! से रूअरेहा !! (ज)—

मज्झे मज्झं तिवलिवलिदं डिंभमुट्ठीअ गेज्झं
णो बाहूहिं रमणफलअं वेट्ठिदुं जादि दोहिं।
णेत्तक्खेत्तं तरुणिपसुईदिज्जमाणोवमाणं
ता पच्चक्खं मह विलिहिदुं जादि एसा ण चित्ते ॥ * ॥३०॥

कथं ण्हाणधोविदविलेवणा समुस्सारिदविहूसणा वि रमणिज्जा !! † (झ)।

---

* अहो ! अस्या रूपरेखा !! (ज)—

मध्ये मध्यं त्रिवलिवलितं डिम्भमुष्ट्या ग्राह्यं
नो बाहुभ्यां रमणफलकं वेष्टितुं याति द्वाभ्याम्।
नेत्रक्षेत्रं तरुणीप्रसृतिदीयमानोपमानं
तत् प्रत्यक्षं मम विलिखितुं यात्येषा न चित्ते॥

† कथं स्नानधौतविलेपना समुत्सारितविभूषणाऽपि रमणीया !!

---

अवमुक्तेत्यर्थः, स्नानघट इवेति भावः, कटाक्षच्छटा अपाङ्गावलोकनपरम्परा यत्र मुक्ता, तां प्रतीति शेषः, अवान्तरे अभिषेकावसरे तत् तस्मात् कर्पूररसेन कर्पूरजलेन धवलितः ननु किम् ? ज्योत्स्नया स्नापितो ननु किम् ? मुक्तानां घनरेणुनेव सान्द्रेण चूर्णेन छुरितः अनुलिप्तः किम् ? जातोऽस्मि। उत्प्रेक्षाऽलङ्कारः ॥ २९ ॥

(ज) अहो ! आश्चर्य्यम्। रूपरेखा सौन्दर्य्यपरम्परा।

मध्ये इति।—त्रिवलीभिः तिसृभिः रेखाभिः वलितं वेष्टितं मध्यं मध्यदेशः, डिम्भस्य बालकस्य मुष्ट्या ग्राह्यं धर्तुं शक्यम्। रमणफलकं जघनपरिसर इत्यर्थः, नितम्बस्थानमिति यावत्, द्वाभ्यां बाहुभ्यां वेष्टितुम् आवरीतुं नो याति न शक्ता भवतीत्यर्थः। नेत्रक्षेत्रं चक्षुःपरिसरः तरुणी विशाला या प्रसृतिः वितस्तिः तया दीयमानम् उपमानं सादृश्यं यस्य तथाभूतं, तत् तस्मात् एषा मम प्रत्यक्षम्, अचिरदृष्टेत्यर्थः, परिदृश्यमानाऽपीत्यर्थः, चित्ते विलिखितुं न याति न शक्यते इति भावः, इति मन्ये तथावधारयामीत्यर्थः ॥ ३० ॥

(झ) कथमिति।—स्नानेन धौतं विलेपनम् अङ्गरागः यस्याः तथोक्ता। समुत्सारितानि अपसृतानि विभूषणानि यया तथाभूता।

अहवा—

जं रूअमुक्का वि विह्नसयंति ताणं अलंकारवसेण सोहा ।

णिसग्गचंगस्स वि माणुसस्स सोहा समुम्मीलदि भूसणेहिं ॥*॥२१॥

राजा । एदाए दाव एदं—

लावण्णं णवजच्चकंचणणिहं णेत्ताण दोहत्तणं

कण्णेहिं खलिदं कओलफलआ दोखंडचंदोवमा ।

एसा पंचसरेण सज्जिदधणूदंडेण रक्खिज्जए

जेणं सोसणमोहणप्पहुदिणो विज्झंति मं मग्गणा ॥†॥२२॥

अथवा—

या रूपमुक्ता अपि विभूषयन्ति तासामलङ्कारवशेन शोभा ।

निसर्गसुन्दरस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः ॥

† एतस्यास्तावदेतत् ।—

लावण्यं नवजात्यकाञ्चननिभं नेत्रयोर्दैर्घ्यत्वं

कर्णाभ्यां स्खलितं कपोलफलकौ द्विखण्डचन्द्रोपमौ ।

एषा पञ्चशरेण सज्जितधनुर्दण्डेन रक्ष्यते

येन शोषणमोहनप्रभृतयो विध्यन्ति मां मार्गणाः ॥

या इति ।—या नार्यः रूपेण सौन्दर्येण मुक्ता विहीनाः अपि विभूषयन्ति भूषणैः अलङ्कुर्वन्ति, अङ्गानीति शेषः, तासाम् अलङ्कारवशेन विभूषणभूषणेनेवेत्यर्थः, शोभा, भवतीति शेषः, निसर्गसुन्दरस्य स्वभावसुन्दरस्य मानुषस्य शोभा च अतःविशेषेति भावः, भूषणैः अलङ्कारैः समुन्मीलति अपि सम्यक् पुष्टिमेत्येवेत्यर्थः ॥ २१ ॥

लावण्यमिति ।—लावण्यं "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणं नवम् अव्यवहृतमिति यावत्, जात्यं शोभनजातीयं यत् काञ्चनं स्वर्णं तन्निभं तत्सवर्णम् । नेत्रयोः दैर्घ्यत्वं विशालत्वं कर्णाभ्यां कर्णयोरुद्देशेन, तत्प्राप्त्याशयेति भावः, तादर्थ्ये चतुर्थी, स्खलितं चलितम्, आकर्णप्रसृष्टे चक्षुषी इति भावः । कपोलफलकौ गण्डभागौ द्विखण्डचन्द्रः अर्द्धचन्द्रः तदुपमौ तत्समौ । सज्जितः संहितः धनुर्दण्डः येन तथाभूतः तेन पञ्चशरेण कामेन एषा रक्ष्यते यत्नेन युज्यते, मदीयेति भावः, येन शरधर्मेण हेतुना शोषण-मोहनप्रभृतयः "शोषणो मोहनश्चैव मादनस्तापनस्तथा । मारणश्चेति विज्ञेयाः शराः पञ्च मनोभुवः ॥" इत्युक्तेः, मार्गणाः शराः, एतत्कटक्षपनायिकान्तर्गताः कटाक्षादय इति भावः, मां विध्यन्ति विद्धं कुर्वन्ति, व्यथयन्तीति भावः ॥ २२ ॥

विदूषकः। [विहस्य]। जाणे रच्छाए लोट्टदि से सोहारयणं (अ)। *

राजा। [विहस्य]। पिअवअस्स! कधेमि दे—

अंगं चंगं णिअगुणगणालंकिदं कामिणीणं
पच्छाअंती उण तणुसिरिं भादि णेवच्छलच्छी।
इत्थं जाणं अवअवगदा कावि संदेरमुद्दा
मण्णे ताणं वलइदधणू णिच्चभुच्चो अणंगो॥ † ॥ २२ ॥

अवि अ एदाए—
तहा रमणवित्थरो जह ण ठाइ कंचीलदा
तहा अ थणतुंगिमा जह ण एइ णाहिं मुहं।

* जाने रथ्याया लुठत्यस्याः शोभारत्नम्।

† प्रियवयस्य! कथयामि ते—
अङ्गं सुन्दरं निजगुणगणालङ्कृतं कामिनीनां
प्रच्छादयन्ती पुनस्तनुश्रियं भाति नेपथ्यलक्ष्मीः।
इत्थं यासामवयवगता काऽपि सौन्दर्यमुद्रा
मन्ये तासां वलयितधनुर्नित्यभृत्योऽनङ्गः॥

‡ अपि च, एतस्याः,—
तथा रमणविस्तरो यथा न तिष्ठति काञ्चीलता
तथा च स्तनतुङ्गिमा यथा नैति नाभिं मुखम्।

(अ) जाने इति।—अस्याः शोभारत्नं सौन्दर्यमणिः रथ्यायां लुठति पतितं तिष्ठति, रथ्यापतितरत्नवत् सर्वं जनं रञ्जयतीति भावः।

अङ्गमिति।—सुन्दरम् अङ्गं निजगुणैः विभ्रमविलासादिभिः अलङ्कृतम्। नेपथ्यलक्ष्मीः परिच्छदकान्तिः पुनः कामिनीनाम्, अन्यासामिति भावः, तनुश्रियं शरीरशोभां प्रच्छादयन्ती आवृण्वती, पराभवन्तीति यावत्, भाति राजते। इत्थम् एवंरूपा यासां कामिनीनां काऽपि अनिर्वचनीया सौन्दर्यमुद्रा सौन्दर्यलक्ष्मीः, अनङ्गः कामः तासां वलयितं मण्डलीकृतम्, आकृष्टमित्यर्थः, धनुर्येन तथाभूतः सन्, नित्यभृत्यः चिरकिङ्कर इति मन्ये। भृत्यो यथा भर्तुराज्ञामन्तरेण तदाशयमेव ज्ञात्वा तत्कार्यं कुरुते, तथाऽसौ अस्या आदेशवचनं विनैव कटाक्षपातजनिताशयविज्ञानेनैव कामिनी वशीकरोतीति भावः॥ २२॥

तहा णअणवंकिमा जह ण किंपि कण्णुप्पलं
तहा अ मुहमुज्जलं दुहरस्सिणो जहा पुण्णिमा ॥‡॥ २४ ॥

देवी । अज्ज कविंजल ! पुच्छिअ जाण, का एसा त्ति । *

विदूषक: । [तां प्रति] । एहि मुद्धमुहि ! उवविसिअ णिवेदेहि का तुमं त्ति ? । †

राजा । आसणमिमीए । ‡ (ट)

विदूषक: । एदं मे उत्तरीअं आसणं । §

[ विदूषकनायिके यथास्थानोपवेशने नाटयत: ] ।

विदूषक: । भोदि ! संपदं कहिज्जदु । ¶

नायिका । अत्थि एत्थ विदब्भं णाम णअरं कुंतलेसु, तहिं सअलजणवल्लहो वल्लहराओ णाम राआ । **

---

तथा नयनवंकिमा यथा न किमपि कर्णोत्पलं
तथा च मुखमुज्ज्वलं हिमरश्मिनी यथा पूर्णिमा ॥

* आर्य कपिञ्जल ! पृष्ट्वा जानीहि, केयमिति ।

† एहि मुग्धमुखि ! उपविश्य निवेदय का त्वमिति ।

‡ आसनमस्यै ।

§ एतन्मे उत्तरीयमासनम् ।

¶ भवति ! साम्प्रतं कथ्यताम् ।

** अस्त्यत्र विदर्भं नाम नगरं कुन्तलेषु, तत्र सकलजनवल्लभो वल्लभराजो नाम राजा ।

---

तथेति ।—स्तनयोर्विस्तर: जघनपरिसरविस्तार: तथा, यथा काञ्चीलता रसना-कलाप: न तिष्ठति न पर्य्याप्नोतीत्यर्थ:, स्तनयो: तुङ्गिमा तुङ्गत्वं तथा, यथा मुखं स्तनयोरिति भाव:, नाभिं न एति न प्राप्नोति, न पश्यतीति भाव: । नयनयो: वङ्किमा विशालता तथा, यथा कर्णोत्पलं न किमपि, निष्प्रयोजनमित्यर्थ:, नेत्रयोरेव तादृप्येण, तदपकृष्टत्वादिति भाव: । मुखञ्च तथा उज्ज्वलं दीप्तिमत्, यथा पूर्णिमा हिमरश्मिनी पौर्णमास्यां प्रतिदिवसमुदेतीवेत्यर्थ: ॥ २४ ॥

( ट ) अस्यै अन्यार्थे चतुर्थी, दीयतामिति शेष: ।

देवी। [स्वगतम्]। जो मह माउस्सिआए पई होई। *

नायिका। तस्स घरिणी ससिप्पहा णाम। †

देवी। [स्वगतम्]। सा वि मे माउस्सिआ। ‡

नायिका। तेहिं अहं उप्पण्णेत्ति। §

देवी। [स्वगतम्]। ण क्खु ससिप्पहागब्भुप्पत्तिमंतरेण ईदिसो रूअरेहा होदि। ण क्खु वेदुरिअभूमिगब्भुप्पत्तिमंतरेण वेदुरिअमणिसलाआ णिप्पज्जई। [प्रकाशम्]। णं तुमं कप्पूरमंजरी ?। ¶

[नायिका सलज्जमधोमुखी तिष्ठति]।

देवी। एहि बहिणिए! आलिंगेसु मं। ** [इति परिष्वजते]।

कर्पूरमञ्जरी। अज्जे! कप्पूरमंजरीए एसो पढमो प्पणामो। ††

देवी। अज्ज भेरवाणंद! तुह प्पसादेण अपुव्वं संविधाणअं (ठ) अणुभविदं कप्पूरमंजरीदंसणेण; ता चिट्ठदु दाव एसा पंचदसदिअसाइं, पच्छा झाणविमाणेण (ड) णइस्सध। ‡‡

* यो मम मातृष्वसुः पतिर्भवति।

† तस्य गृहिणी शशिप्रभा नाम।

‡ साऽपि मे मातृष्वसा।

§ ताभ्यामहमुत्पन्नेति।

¶ न खलु शशिप्रभागर्भोत्पत्तिमन्तरेणेदृशी रूपरेखा भवति। न खलु वैदूर्यभूमिगर्भोत्पत्तिमन्तरेण वैदूर्यमणिशलाका निष्पद्यते। ननु त्वं कर्पूरमञ्जरी ?।

** एहि भगिनि! आलिङ्गय माम्।

†† आर्ये! कर्पूरमञ्जर्या एष प्रथमः प्रणामः।

‡‡ आर्य भैरवानन्द! तव प्रसादेन अपूर्वं संविधानकमनुभूतं कर्पूरमञ्जरीदर्शनेन; तत तिष्ठतु तावदेषा पञ्चदशदिवसानि, पश्चात् ध्यानविमानेन नेष्यथ।

(ठ) संविधानकं व्यापारविशेषः।

(ड) ध्यानविमानेन ध्यानं समाधिरेव विमानम् आकाशसञ्चारी रथविशेषः तेन।

भैरवानन्दः। जं भणादि देई। *

विदूषकः। [राजानमुद्दिश्य]। भो वअस्स! अम्हे परं दुए वि बाहिरा एत्थ, जदो एदाणं मिलिदं कुटुंबअं वट्टदि, जदो इमोए दुवो वि बहिणिआओ। भैरवाणंदो उण एदाणं संजोअआरो अच्चिदो मच्चिदो अ। एसा वि महोअलसरस्सई अ कुट्टणी देहंतरेण देवी ज्जेव्व। † (ढ)

देवी। विअक्खणे! णिअजेट्ठबहिणिअं सुलक्खणं भणिअ भैरवाणंदस्स हिअअट्ठिआ सपज्जा कादव्वा। ‡

विअक्खणा। जं देवी आणवेदि। §

देवी [राजानं प्रति]। अज्जउत्त! पेसिहि मं, जेण अहं बहिणीए एदावत्थाए णेवच्छकलक्कोलोआणिमित्तं अंतेउरं गमिस्सं। ¶

राजा। जुज्जदि चंपअलदाए कत्थूरिआकप्पूरेहिं आलबाल-परिपूरणं। ** (ण)

* यत् भणति देवी।

† भो वयस्य! आवां परं द्वावपि बाह्यावत्र, यत एतयोः मिलितं कुटुम्बकं वर्तते, यत इमे द्वे अपि भगिन्यौ। भैरवानन्दः पुनरेतयोः संयोगकारोऽर्चितो मानितश्च। एषाऽपि महीतलसरस्वती च कुट्टनी देहान्तरेण देव्येव।

‡ विचक्षणे! निजज्येष्ठभगिनिकां सुलक्षणां भणित्वा भैरवानन्दस्य हृदयेप्सिता सपर्य्या कर्त्तव्या।

§ यत् देवी आज्ञापयति।

¶ आर्य्यपुत्र! प्रेषय मां, येनाहं भगिन्या एतदवस्थाया नेपथ्यकल्लोला-निमित्तमन्तःपुरं गमिष्यामि।

** युज्यते चम्पकलतायाः कस्तूरीकर्पूरैरालबालपरिपूरणम्।

(ढ) बाह्याविति।—बाह्यौ बहिरङ्गौ, उदासीनाविति यावत्। कुटुम्बकं सम्पर्कः। कुट्टनी महिला।

[ नेपथ्ये ] ।

वैतालिकयोरेकः । सुहाअ संझा भोदु देवस्स ।—

एदं वासरजीवपिंडसरिसं चंडंसुणो मंडलं
को जाणादि कहिं पि संपदि गदं एतम्मि कालंतरे ।
जादा किं च इमं पि दीहविरहा सोएण णाहे गदे
मुच्छामुद्दिदलोअणे व्व णलिणी मीलंतपंकेरुहा ॥ * ॥ २५ ॥

द्वितीयः ।—

उग्घाडीअंति लीलामणिमअवलहीचित्तभित्तीणिवेसा
पल्लंका किंकरीहिं उदुसमअसुहा वित्थरिज्जंति झत्ति ।

सुखाय सन्ध्या भवतु देवस्य ।—

एतद्वासरजीवपिण्डसदृशं चण्डांशोर्मण्डलं
को जानाति क्वापि सम्प्रति गतमेतस्मिन् कालान्तरे ।
जाता किं चेयमपि दीर्घविरहा शोकेन नाथे गते
मूर्च्छामुद्रितलोचनेव नलिनी मीलत्पङ्केरुहा ॥

† उद्घाट्यन्ते लीलामणिमयवलभीचित्रभित्तिनिवेशाः
पर्यङ्काः किङ्करीभिः ऋतुसमयसुखा विस्तार्यन्ते झटिति ।

( * ) चन्द्रकर्पूरैः मृगनाभिकर्पूरैः, [illegible] आधार-विशेषणेऽर्थः ।

एतदिति ।—वासरस्य दिवसस्य जीवपिण्डसदृशं जीवनपुञ्जतुल्यं चण्डांशोः सूर्यस्य मण्डलम् एतस्मिन् कालान्तरे कालापगमे सम्प्रति क्वापि कस्मिन्नपि देशे गतं को जनः जानाति ? न कोऽपीत्यर्थः । किञ्च इयमपि नलिनी पद्मिनी नाथे भर्तरि गते प्रोषिते इत्यर्थः, दीर्घो विरहो यस्याः तथोक्ता दीर्घकालविरहिणी, मीलन्ति पङ्केरुहाणि पद्मानि यस्याः तथाभूता, अत एव शोकेन मूर्च्छया मुद्रिते निमीलिते लोचने यस्याः तथाभूतेव जाता किम ? इत्युत्प्रेक्षा ॥ २५ ॥

उद्घाट्यन्ते इति ।—लीलायै क्रीडायै मणिमय्यः रत्ननिर्मिताः, वलभ्यः गोपानस्यः, पारावतनिलया इति भावः, "गोपानसी तु वलभी छादने वक्रदारुणि" इत्यमरः ; चित्रभित्तिनिवेशाः चित्रयुक्तानि च उद्घाट्यन्ते, दिवसे घोरातपेन कपोतानां क्लेशपरि-हाराय चित्रम्लानताच्च आतपयोगे मालिन्यसम्भवात् रात्रौ तेषामुद्घाटनमिति भावः

सेरंधीलोलहत्थंगुलिचलणवसा पट्टणादो पअट्टो
हुंकारो मंडपेसुं विलसदि महुरो कट्टतुट्टंगणाणं ॥ † ॥ ३४ ॥

राजा । अम्हे वि संझं वंदिदुं गमिस्सामो । *

[ इति निष्क्रान्ताः सर्वे ] ।

इति प्रथमं जवनिकान्तरम् ।

—०—

# द्वितीयं जवनिकान्तरम् ।

[ ततः प्रविशति राजा प्रतीहारी च ] ।

प्रतीहारी । [ परिक्रामितकेन ] । इदो इदो महाराओ ।

राजा । [ कतिचित्पदानि गत्वा, तामनुसन्धाय ]—(क)

तहिं क्खु अवसरे—

सैरिन्ध्रीलोलहस्ताङ्गुलिचलनवशात् पट्टनादः प्रवृत्तः
हुङ्कारो मण्डपेषु विलसति मधुरो कष्टतुष्टाङ्गनानाम् ॥
वयमपि सन्ध्यां वन्दितुं गमिष्यामः ।

* इत इत महाराजः ।

† तस्मिन् खलु अवसरे—

किङ्करीभिः दासीभिः ऋतुस्नानसमुत्सुकाः कमलासनसुखकराः पर्यङ्काः झटिति शीघ्रं विस्तार्यन्ते सज्जीक्रियन्ते इति भावः । सैरिन्ध्रीणां परगृहवासिनीनां स्वाधीनानां स्त्रीणां लोलाभिः चञ्चलाभिः हस्ताङ्गुलिभिः चलनवशात् वादनविशेषात् पट्टनादः पट्टानां मृदङ्गानां नादः ध्वनिः प्रवृत्तः उद्भूतः । तथा मण्डपेषु गृहेषु कष्टानां तीव्रपीडानां, मानिनीनामिति भावः, तुष्टानां प्रीतमनसाञ्च अङ्गनानां नारीणां मधुरः मनोहरः हुङ्कारः प्रियेषु तर्जनरवः चाटुरवश्च विलसति प्रसरति ॥ ३४ ॥

(क) ताम् अनुसन्धाय तां कर्पूरमञ्जरीम् अनुसन्धाय अनुसृत्य ।

मूलाहिंतो परहुअबहूकंठमुद्दं दलंता
देंता दीहं महुरिमगुणं जम्पिदे छप्पआणम् ।
संचारंता विरहिसु णवं पंचमं किंच राअं
राओम्मत्ता रइकुलहरा वासरा वित्थरंति ॥ † ॥ २ ॥

राजा। [ तदेवाकर्ण्य सानुरागम् ]।—

आत्थाणीजणलोअणाणं बहुला लावण्णकल्लोलिणी
लीलाविब्भमहासवासणअरी सोभाग्गपारट्ठिआ ।

मूलात्प्रभृति परभृतवधूकण्ठमुद्रां दलन्तो
ददतो दीर्घं मधुरिमगुणं जल्पिते षट्पदानाम् ।
सञ्चारयन्तो विरहिषु नवं पञ्चमं किञ्च रागं
रागोन्मत्ता रतिकुलगृहा वासरा विस्तीर्य्यन्ते ॥

‡ आस्थानीजनलोचनानां बहुला लावण्यकल्लोलिनी
लीलाविभ्रमहासवासनगरी सौभाग्यपारस्थिता ।

सवर्ण्या मतं स्थितम्। विषयान्तरे मनोनिवेशात् स्वस्य हृदयावेगस्य गोपितत्वं कारितं वसन्तवर्णनेनेत्युक्तम् ।

(ग) दृष्टिमिति।—ईषद्दीपन् स्वल्पाल्पं अरठायमाने विकसति कुसुमाकरे पुष्पसमये कुसुमानामाकरः उत्पत्तिस्थानं तस्मिन् उद्याने इत्यर्थः, "आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति विश्वः ।

मूलादिति।—मूलात् आरम्भात् प्रभृति परभृतवधूनां कोकिलानां कण्ठमुद्रां कण्ठनिरोधं दलन्तः भिन्दन्तः, 'दल भेदे' इत्यस्मात् शतृप्रत्ययः; कोकिलरवं जनयन्त इति भावः, षट्पदानां भ्रमराणां जल्पिते गुञ्जने दीर्घं मधुरिमगुणं माधुर्य्यगुणं, मधुरतामित्यर्थः, ददतः उत्पादयन्त इत्यर्थः, किञ्च विरहिषु नवं पञ्चमञ्च, कोकिले-ष्विति शेषः, रागम् अनुरागं स्वरविशेषञ्च सञ्चारयन्त उद्दीपयन्तः, "पुष्पसाधारणे काले पिकः कूजति पञ्चमम्" इत्युक्तः; कोकिलेषु पञ्चमरागञ्च विरहिषु च अभिनवानुरागस्य उद्दीपकोऽयं काल इति भावः, रागेण रत्यावेशेन उन्मत्तम् उन्मादः, भावे क्तप्रत्ययः; येषु तथोक्ताः, रतेः शृङ्गारस्य व्याधिभावस्य कुलगृहाः कुलक्रमेण आगता इत्यर्थः, वासरा वसन्तदिवसाः विस्तीर्य्यन्ते क्रमेण वर्द्धन्ते इत्यर्थः। कर्मकर्त्तरि यक् ॥ २ ॥

णेत्तेंदीवरदीहिआ मह उणो सिंगारसंजीअणी
संजादा अह मम्महेण धणुहे तिक्खो सरो पुंखिदो ॥ ॐ ॥ ३ ॥

[सौन्मादमिव]। दंसणक्खणादो पहुदि कुरंगाक्खी (घ)—

चित्ते चिहुट्टदि ण क्खुट्टदि सा गुणेसु
सेज्जासु लोट्टदि विसप्पदि दिम्मुहेसु ।
बोल्लम्मि वट्टदि पअट्टदि कव्वबंधे
झाणेण तुट्टदि चिरं तरुणी चलाक्खी ॥ * ॥ ४ ॥

नेत्रेन्दीवरदीर्घिका मम पुनः शृङ्गारसञ्जीविनी
सञ्जाताऽथ मन्मथेन धनुषि तीक्ष्णः शरः पुङ्खितः ॥

* दर्शनक्षणात् प्रभृति कुरङ्गाक्षी—

चित्ते तिष्ठति न क्षीयते सा गुणेषु
शय्यायां लुठति विसर्पति दिङ्मुखेषु ।
वचसि वर्तते प्रवर्तते काव्यबन्धे
ध्यानेन तुट्यति चिरं तरुणी चलाक्षी ॥

आस्थानीति।—आस्थानी सभा तत्र ये जनाः सभासद इत्यर्थः, तेषां जीवनानि नेत्राणि तेषां मधुरा पूर्णेति भावः, लावण्यसञ्जीविनी लावण्यमयी तरङ्गिणी, सभा-जनानां नेत्राणि लावण्यसलिलैरिव पूरयन्तीति भावः। जीर्णाविभ्रमेव यो हासः मन्दस्मितं तस्य वासनगरी, जीर्णाविभ्रमेव मृदुमन्दहासिनीति भावः। सौभाग्यस्य माहात्म्यस्य पारे अन्ते स्थिता सौभाग्यस्य परमोत्कर्षशालिनीत्यर्थः। नेत्रे एव इन्दीवरे नीलोत्पले तयोः दीर्घिका वापी, मम पुनः मम तु शृङ्गारसञ्जीविनी शृङ्गार-रसोद्दीपिनी सञ्जाता, सा कर्पूरमञ्जरीति इहावस्थितेति शेषः। अथ अनन्तरमेव मन्मथेन कामेन धनुषि तीक्ष्णः अत्युग्रः शरः पुङ्खितः योजितः, तद्दर्शनेनैवाहं कामावेशपरवश आसं, तथापि पुनस्तच्छरेणाविद्ध इति भावः ॥ ३ ॥

(घ) कुरङ्गाक्षी हरिणनयना।

चित्ते इति।—चलाक्षी चञ्चलनेत्रा सा तरुणी चिरं सततं चित्ते तिष्ठति, गुणेषु सौन्दर्यादिषु न क्षीयते क्षीणैव न, अपि तु सर्वगुणशालिन्येव प्रतीयते इति भावः; शय्यायां लुठति शेते, मत्पार्श्वे इति शेषः, दिङ्मुखेषु विसर्पति सञ्चरति, वचने वर्तते मद्वाक्ये प्रतीतेत्यर्थः; काव्यबन्धे काव्यरचनायां, मत्कृतिविषयीभवतीति भावः, प्रवर्तते

अवि अ—

जे तीअ तिक्खचलचक्खुतिभाअदिट्ठा
ते कामचंदमहुपंचममारणिज्जा ।
जेसुं उणो णिवडिदा सअला वि दिट्ठी
वट्टंति ते तिलजलांजलिदाणजोग्गा ॥ * ॥ ५ ॥

[ सकरुणमिव ] । अवि अ—

अग्गम्मि भिंगसरणी णअणाण तीए
मज्झे उणो कढ़िददुद्धतरंगमाला ।

* अपि च—

ये तया तीक्ष्णचलचक्षुस्त्रिभागदृष्टाः
ते कामचन्द्रमधुपञ्चममारणीयाः ।
येषु पुनर्निपतिता सकलाऽपि दृष्टिः
वर्तन्ते ते तिलजलाञ्जलिदानयोग्याः ॥

† अपि च—

अग्रे भृङ्गसरणिर्नयनयोस्तस्याः
मध्ये पुनः क्वथितदुग्धतरङ्गमाला ।

प्रक्रमते, तस्य ध्याने सततभावनायामिति यावत्, न त्रुट्यति न च्यवते, न मनः अन्तरं गच्छतीत्यर्थः ॥ ४ ॥

ये इति ।—तया कान्तया ये जनाः तीक्ष्णस्य कटुनः चलस्य चञ्चलस्य चक्षुषः त्रिभागेन तृतीयभागेन, क्वचित् षड्भागस्य पूरणार्थत्वं दृश्यते ; दृष्टाः अवलोकिताः, ते जनाः कामेन चन्द्रेण मधुना वसन्तेन पञ्चमेन कोकिलस्वरेण च, "पुष्पसाधारणे काले पिकः कूजति पञ्चमम्" इत्युक्तेः, मारणीया विनाशनीयाः, तेषां कामादिभिर्विनाशो भविष्यति, न तु साम्प्रतमिति भावः ; भव्यार्थे अनीयप्रत्ययः ; कामादीनां चतुर्णां षड्वैन मरणानुकूलव्यापारसमवायसंयोगादवश्यमेव मरणं तेषां भवतीति बोध्यते । पुनः किन्तु येषु जनेषु सकलाऽपि दृष्टिः तीक्ष्णचलेति भावः, निपतिता, ते तिलजलाञ्जलिदानयोग्याः तिलसलिलाञ्जलिदानस्य तर्पणस्येति यावत्, योग्याः वर्तन्ते, मृता एवेति भावः ॥ ५ ॥

अग्रे इति ।—तस्या नयनयोः अग्रे भृङ्गाणां सरणिः पङ्क्तिः, भृङ्गावलीवेति

पच्छा अ से मरदि तंसणिरोक्खिदेसु
आअण्णमंडलिअचावधरो अणंगो ॥ † ॥ ६ ॥

[ विचिन्त्य ]। कधं चिरअदि प्पिअवअस्सो ? * ।

[ प्रविश्य विदूषको विचक्षणा च परिक्रामतः ]।

विदूषकः। अइ विअक्खणे ! सव्वं सच्चं एदं ? †

विचक्खणा। सव्वं सच्चअरं। ‡ (ङ)

विदूषकः। णाहं पत्तिज्जामि, जदो परिहाससीला क्खु तुमं। §

विचक्खणा। अज्ज ! मा एव्वं भण; अण्णो वक्कुत्तिकालो, अण्णो कज्जविआरकालो। ¶

विदूषकः। [ पुरोऽवलोक्य ]। एसो प्पिअवअस्सो हंसो विअ विमुक्कमाणसो, करी विअ मदक्खामो, मुणालदंडो विअ घणघम्ममिलाणो, दिणदीवो विअ विगलिअच्छाओ, प्पभाद-पुण्णिमाचंदो विअ पंडुरपरिक्खीणो चिट्ठदि। ** (च)

पश्चाच्च तस्याः स्मरति तिर्यङ्निरीक्षितेषु
आकर्णमण्डलितचापधरोऽनङ्गः ॥

* कथं चिरयति प्रियवयस्यः ? ।

† अयि विचक्षणे ! सर्वं सत्यमिदम् ?

‡ सर्वं सत्यतरम् ।

§ नाहं प्रत्येमि, यतः परिहासशीला खलु त्वम् ।

¶ आर्य्ये ! मैवं भण ; अन्यो वक्रोक्तिकालः, अन्यः कार्य्यविचारकालः ।

** एष प्रियवयस्यो हंस इव विमुक्तमानसः, करीव मदक्षामः, मृणालदण्ड-

भावः। पुनः किन्तु मध्ये कुञ्चितस्य आवर्त्तितस्य दुग्धस्य तरङ्गमाला ऊर्मिरोलिः। पश्चात् तस्याः तिर्यक् निरीक्षितेषु अनङ्गः कामः आकर्णे मण्डलितं कृतं चापं धनुर्धरतीति तथाविधः सन् स्मरति सञ्चरति ॥ ६ ॥

(ङ) सत्यतरम् अतिशयेन सत्यमित्यर्थः।

(च) एष इति।—विमुक्तं विरहितं मानसं हृदयं सरश्च येन तथाभूतः। मद-

उभे। [परिक्रम्य]। जअदु जअदु महाराओ। *

राजा। वअस्स! कधं उण विअक्खणाए मिलिदो सि? †

विदूषकः। अज्ज विअक्खणा मए सह संधिं कादुं आअदा। किदसंधीए इमीए सह मतअंतस्स एत्तिआ वेला लग्गा। ‡ (क)

राजा। संधिकरणस्स किं फलं?। §

विदूषकः। एसा अहिमदजणप्पेसिदा लेहहत्था णं विअक्खणा आअदा। ¶ (ख)

राजा। [गन्धं सूचयित्वा]। केदईकुसुमगंधो विअ आआदि? **

विचक्षणा। केदईदललेहो ज्जेव्व एसो मह हत्थे। ††

इव घनघर्मम्लानः, दिनदीप इव विगलितच्छायः, प्रभातपूर्णिमाचन्द्र इव पाण्डुर-परिक्षीणस्तिष्ठति।

* जयतु जयतु महाराजः।

† वयस्य! कथं पुनर्विचक्षणया मिलितोऽसि?।

‡ अद्य विचक्षणा मया सह सन्धिं कर्तुमागता। कृतसन्ध्यैतया सह मन्त्रयमाणस्यैतावती वेला लग्ना।

§ सन्धिकरणस्य किं फलम्?।

¶ एषा अभिमतजनप्रेषिता लेखहस्ता ननु विचक्षणा आगता।

** केतकीकुसुमगन्ध इव आयाति।

†† केतकीदललेख एवैष मम हस्ते।

क्षामः मदेन मदनावेशजनितेन विकारेण दानवारिस्रवणेन च क्षामः क्षीणः। घनघर्म-म्लानः घनेन सान्द्रेण, बहुलेनेत्यर्थः, घर्मेण स्वेदोदयजनितेनेति भावः, ग्रीष्मेण च म्लानः क्लान्तः। विगलितच्छायः विगतप्रभः। पाण्डुरपरिक्षीणः पाण्डुरः पाण्डुवर्णः परिक्षीणः दुर्बलः।

(क) सन्धिं सम्मेलनम्। कृतसन्ध्या कृतसम्मेलनया। लग्ना गता।

(ख) एषेति।—एषा विचक्षणा अभिमतजनेन प्रियजनेन, केनचिदिति भावः, प्रेषिता प्रहिता। लेखहस्ता पत्रहस्ता।

राजा। महुसमए कधं केदईकुसुमं ?।

विचक्षणा। भेरवाणंदसिद्धमंतप्पहावेण देवीभवणुज्जाणे केदईलदाए एक्को दाव प्पसवो दंसिदो। तस्स ताए देवीए दल-संपुडेहिं अज्ज हिंदोलअप्पभंजणीए चउत्थीए हरवल्लहा देवी अच्चिदा। अवरं च दलसंपुडजुअलं उण कणिट्ठबहिणीआए कप्पूरमंजरीए पसादीकिदं। ताए वि एक्केण दलसंपुडेण भअवदी गोरी ज्जेव्व अच्चिदा। अवरं च—(ञ)

केदईकुसुमपत्तसंपुडं पाहुडं तुह सहीअ पेसिदं।
एण्णणाहिमसिवण्णसोहिणा तं सिलोअजुअलेण लंछिदं ॥७॥

[इति लेखमर्पयति]।

मधुसमये कथं केतकीकुसुमम् ?

+ भैरवानन्दसिद्धमन्त्रप्रभावेण देवीभवनोद्याने केतकीलतया एकस्तावत् प्रसवो दर्शितः। तस्य तया देव्या दलसम्पुटैरद्य हिन्दोलकप्रभञ्जन्यां चतुर्थ्यां हरवल्लभा देवी अर्चिता। अपरञ्च दलसम्पुटयुगलं पुनः कनिष्ठभगिन्यै कर्पूरमञ्जर्यै प्रसादीकृतम्। तयाऽपि एकेन दलसम्पुटेन भगवती गौरी एव अर्चिता। अपरञ्च—

केतकीकुसुमपत्रसम्पुटं प्राभृतं तव सख्या प्रेषितम्।
एणनाभिमसीवर्णशोभिना तत् श्लोकयुगलेन लाञ्छितम् ॥

(ञ) भैरवेति।—देवीभवनस्य उद्याने उपवने। प्रसवः कुसुमम्। तस्य प्रसवस्य। दलसम्पुटैः दलसञ्चयैः। हिन्दोलकप्रभञ्जन्यां हिन्दोलकं भगवतो दोल-महोत्सवः तत्प्रभञ्जनी तदुत्सवभङ्गकारिणीत्यर्थः तस्यां, चतुर्थ्यां, तिथाविति शेषः, अत्र देशे फाल्गुनपौर्णमासीमारभ्य चतुर्थीपर्यन्तं दोलमहोत्सवः क्रियते, ततश्च तन्निवृत्तिरित्याचार इति भावः। हरवल्लभा गौरी। तया कर्पूरमञ्जर्या।

केतकीति।—तव सख्या कर्पूरमञ्जर्येति भावः, मदीयया भगिनीत्वसम्बन्धेन भवत्याः सखीत्वमिति भावः, एणनाभिर्मृगनाभिः, कस्तूरीत्यर्थः, एव मसी लेखोप-योगीनिरसविशेषः, सैव वर्णः तेन शोभिना लिखितेनेति भावः, श्लोकयुगलेन लाञ्छितम् अलङ्कृतं केतकीकुसुमपत्रसम्पुटं तव प्राभृतं प्रेषितम् उपढौकितम् ॥ ७ ॥

राजा। [पत्रार्थं वाचयति]।—

हंसिं कुंकुमपंकपिंजरतणुं काऊण जं वंचिदो
तब्भत्ता किल चक्कवाअघरिणी एसत्ति मण्णंतओ।
एदं तं मह दुक्कदं परिणदं दुक्खाणं सिक्खवणं
एक्कत्थो वि ण जासि जेण विसअं दिट्ठिविभाअस्स वि॥८॥

[शिरश्चालयित्वा]। एदाइं ताइं मअणरसाअणक्खराइं। * (अ)

विचक्षणा। दुदीओ उण मए पिअसहीए अवत्थाणिवेदओ कदुअ सिलोओ लिहिदो एत्थ, तं वाचेदु महाराओ। †

राजा। [वाचयति]।—

सह दिवसणिसाहिं दीहरा सासदंडा

* हंसीं कुङ्कुमपङ्कपिञ्जरतनुं कृत्वा यद्वञ्चितः
तद्भर्ता किल चक्रवाकगृहिणीयमिति मन्यमानः।
एतत्तन्मम दुष्कृतं परिणतं दुःखानां शिक्षकं
एकस्थोऽपि न यासि येन विषयं दृष्टिविभागस्यापि॥
एतानि तानि मदनरसायनाक्षराणि।

† द्वितीयः पुनर्मया प्रियसख्या अवस्थानिवेदकः कृत्वा श्लोको लिखितोऽत्र, तं वाचयतु महाराजः।

हंसीमिति।—हंसीं स्वानुरक्तामिति भावः, कुङ्कुमपङ्केन कुङ्कुमद्रवेण पिञ्जरा पिङ्गला तनुरङ्गं यस्याः तथाभूतां तां कृत्वा, स्वयमिति भावः, चक्रवाकस्य गृहे हंसी प्रिया चक्रवाकीत्यर्थः, एषा तत्सवर्णत्वादिति भावः, इति मन्यमानः जानन् तस्याः हंस्याः भर्ता हंस इत्यर्थः, यत् यथा वञ्चितः किल प्रतारित एव, दैवेनेति शेषः, यथा हंसीमनुरागिणीमपि परकीयां मन्यमानः तां त्यजतीति भावः, तत् तथा दुःखानां शिक्षकं दायकमिति भावः, एतत् मम दुष्कृतं परिणतं परिपाकं गतं, येन दुष्कृतपरिणामेन एकस्थोऽपि एकस्थानस्थितोऽपि त्वं दृष्टिविभागस्यापि, नयनेति शेषः, विषयं गोचरं न यासि चक्षुरपि न दृश्यसे इति भावः। त्वयि अनुरक्ता मां त्वं यत् न सम्भावयसि तन्ममैव दुष्कृतपरिणाम इति निष्कर्षः॥ ८॥

(अ) मदनेति।—मदनस्य कामस्य रसायनानि औषधविशेषा एव अक्षराणि वर्णा इत्यर्थः।

सह मणिवलएहिं बाहधारा गलंति।
सुहअ! तुअ विओए तीअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा॥ *॥ ९॥

विदूषकः। एत्थ ज्जेव एदाए अवत्थाए मह जेट्ठ-बहिणिआए सुलक्खणाए उग्गारिआए भविअ सिलोओ किदो, तं महाराओ सुणादु। (८) [पठति]।—

णीसासा हारजट्ठीसरिसपसरणा चंदणं फोडकारी
चंदो देहस्स दाहो सुमरणसरिसो हाससोहा मुहम्मि।
अंगाणं पंडुभाओ दिवससमसिकलाकोमलो किं च तीए
णिच्चं बाप्पप्पवाहो तुह सुहअ! किदे होंति कुल्लाहिं तुल्ला।†॥१०॥

* सह दिवसनिशाभ्यां दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति।
सुभग! तव वियोगे तस्या उद्वेगिन्या
सह च तनुलतया दुर्बला जीविताशा॥

† अत्रैव एतस्या अवस्थाया मम ज्येष्ठभगिन्या सुलक्षणया उद्गारिण्या भूत्वा श्लोकः कृतः, तं महाराजः शृणोतु।

निःश्वासा हारयष्टिसदृशप्रसरणाश्चन्दनं स्फोटकारी
चन्द्रो देहस्य दाहः स्मरणसदृशो हासशोभा मुखेऽपि।
अङ्गानां पाण्डुभावो दिवसशशिकलाकोमलः किञ्च तस्याः
नित्यं बाष्पप्रवाहास्तव सुभग! कृते भवन्ति कुल्याभिस्तुल्याः॥

हे सुभग! वल्लभ! तव वियोगे विरहे तस्याः कर्पूरमञ्जर्याः दिवसनिशाभ्यां सह श्वासा एव दण्डाः अलघवः दीर्घाः आयताः, जाता इति शेषः, दिवसो दीर्घः निशा दीर्घा श्वासाश्च दीर्घा इत्यर्थः, बाष्पधारा अश्रुप्रवाहाः मणिवलयैः रत्नवलयैः सह गलन्ति पतन्ति, विरहव्याकुलितत्वात् विरहकार्श्याच्चेति भावः, जीविताशा च जीवन-धारणस्य आशा च उद्वेगिन्या रणरणकवत्या तनुलतया सह दुर्बला क्षीणा, तनुलता तथा क्षीणा यथा जीविताशा नास्ति तस्या इति भावः॥ ९॥

(८) इहैव अस्मिन्नेव पत्रसम्पुटे इत्यर्थः, उद्गारिण्या निवेदयित्र्या।

हे सुभग! तव कृते निमित्तं तस्याः निःश्वासाः हारयष्टेः हारलतायाः सदृशं

राजा। [निःश्वस्य]। किं भणीअदि, सुकइत्तणे तुह जेट्ठ-बहिणिआ क्खु एसा। *

विदूषकः। एसा विअक्खणा महोदलसरस्सई। एदाए जेट्ठ-बहिणिआ तिहुअणसरस्सई। ता एदाहिं समं प्पडिप्पद्धं ण करिस्सं। किं उण प्पिअवअस्स! पुरदो मअणावत्थं अत्तणो उचिदेहिं अक्खरेहिं णिवेदेमि। † (ठ)

राजा। पढ़, एदं पि सुणीअदि। ‡

विदूषकः।—

परं जोण्हा उण्हा गरलसरिसो चंदणरसो
खदक्खारो हारो रअणिपवणा देहतवणा।

* किं भण्यते, सुकवित्वे तव ज्येष्ठभगिनिका खलु एषा।

† एषा विचक्षणा महोत्पलसरस्वती। एतस्या ज्येष्ठभगिनिका त्रिभुवन-सरस्वती। तदेताभ्यां समं प्रतिस्पर्द्धां न करिष्यामि। किं पुनः प्रियवयस्य! पुरतो मदनावस्थामात्मन उचितैः अक्षरैर्निवेदयामि।

‡ पठ, एतदपि श्रूयते।

§ परं ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरसः
क्षतक्षारो हारो रजनिपवना देहतपनाः।

ग्रहरणं विस्तारः येषां तथोक्ताः, चन्दनरसः स्फोटकादौ पङ्कजके तीव्र इति भावः, चन्द्रः टङ्कस्य दाहः दहनकारीत्यर्थः, मृगेऽपि डाहस्य शोभा आरम्भहृद्यो, क्षितेऽहं यार्तस्या युष्माभिरित्येवमभिव्यक्तिरिति भावः, यद्वाणां पाण्डुभावः निष्प्रभतेति यावत्, दिवसे या अविकला चन्द्रकला तस्य कोमलः मृदुलः, किम बाष्पाणाम् अश्रूणां प्रवाहाः नित्यं सततं कुल्याभिः कृत्रिमसरिद्भिः "कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः; तुल्याः भवन्ति ॥ १० ॥

(ठ) किं पुनः किन्तु हे प्रियवयस्य! पुरतः अग्रतः, तवेति शेषः। अक्षरैः वचनैः।

विअक्खणा ।—

घणसुव्वट्टिदमंगं कुंकुमरसपंकपिंजरं तिस्सा ।

राजा ।—

चोसाअणं किदं ता कंचणमअवालिआरूवम् ॥ † ॥ १२ ॥

विअक्खणा ।—

मरगअमंजीरजुअं चरणे से लंभिआ वअस्साहिं । ‡

राजा ।—

भमिदमधोमुहपंकअजुअलं ता भमरमालाए ॥ § ॥ १३ ॥

विअक्खणा ।—

राअसुअपिच्छणीलं पट्टंसुअजुअलअं णिवसिदा सा । ¶

राजा ।—

कअलीकंदलिआ ता खरपवणविलोलिअदलग्गा ॥ ** ॥ १४ ॥

* घनसुवर्त्तितमङ्गं कुङ्कुमरसपङ्कपिञ्जरं तस्याः ।

† उज्ज्वलीकृतं तत् काञ्चनमयबालिकारूपम् ॥

‡ मरकतमञ्जीरयुगं चरणावस्या आप्नुतो वयस्याभिः ।

§ भ्रमितमधोमुखपङ्कजयुगलं तत् भ्रमरमालया ॥

¶ राजशुकपिच्छनीलं पट्टांशुकयुगलकं निवसिता सा ।

** कदलीकन्दली तत् खरपवनविलोलितदलाग्रा ॥

घना या सुवर्त्तिका, तया वर्त्तितं निर्मितं, घनेनाङ्गेन सुवर्त्तं, अतिशयेन कोमलत्वं व्यज्यते, तस्या अङ्गं कुङ्कुमरसपङ्केन पिञ्जरं पिङ्गलं, रञ्जितमिति यावत्, काञ्चनबालिकारूपेण समुज्ज्वलितमिति भावः ॥ १२ ॥

मरकतेति ।—मरकतमञ्जीरयुगं हरिन्मणिनिर्मितं नूपुरयुगलं, "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः, वयस्याभिः सखीभिः लम्भितौ प्रापितौ । तत् तदा भ्रमरमालया भ्रमरावल्या अधोमुखपङ्कजयुगलस्य चरणतुल्यं कमलद्वयं भ्रमितं वेष्टितम् । चरणयुगलस्य पङ्कजयुगलेन मञ्जीरयुगलस्य च भ्रमरमालया साम्यमिति भावः ॥ १३ ॥

सा कामिनी राजः शुकः पक्षिविशेषः तस्य पिच्छमिव बर्हमिव नीलम् । निवसिता परिधापिता । कदली रम्भातरुरिव कन्दली नवाङ्कुरो तत् तदा खरेण तीव्रेण पवनेन विलोलितं चञ्चलं दलाग्रं पत्राग्रं यस्याः तथोक्ता ॥ १४ ॥

विचक्षणा ।—

उभएसु वि सवणेसुं णिवेसिदं रअणकुंडलजुअं से । *

राजा ।—

ता वदणमम्महरहो दोहिं वि चक्केहिं चंकमिदो ॥ † ॥१८॥

विचक्षणा ।—

अंजणजणिदपसाहणाइं जादाइं तीअ णअणाइं । ‡

राजा ।—

उप्पुंखिअ णवकुवलअसिलीमुहे पंचबाणस्स ॥ § ॥ १९ ॥

विचक्षणा ।—

कुडिलालआणं माला ललाडफलअग्गसंगिणी रइदा । ¶

राजा ।—

ता ससिबिंबस्सोवरि वट्टइ मज्झम्मि किसणसारंगो ॥ ** ॥ २० ॥

* उभयोरपि श्रवणयोर्निवेशितं रत्नकुण्डलयुगं तस्याः ।

† तद्वदनमन्मथरथो द्वाभ्यामिव चक्राभ्यां चङ्क्रमितः ॥

‡ अञ्जनजनितप्रसाधने जाते तस्या नयने ।

§ उत्पुङ्खितौ नवकुवलयशिलीमुखौ पञ्चबाणस्य ॥

¶ कुटिलालकानां माला ललाटफलकाग्रसङ्गिनी रचिता ।

** तच्छशिबिम्बस्योपरि वर्तते मध्ये कृष्णसारङ्गः ॥

तव मुक्तो तिष्ठति तदा सम्प्रतिपुष्यतीति भणितः । तत् तदा तारकानिकरः नक्षत्राणि: पङ्क्तिभिः मज्जलाक्षारेण मुखमिव चन्द्रं सेवते अनुगच्छति इत्यर्थः ॥१७॥

तस्याः उभयोः श्रवणयोः कर्णयोः रत्नकुण्डलयुगं निवेशितं निहितम् । तत् तदा वदनमेव मन्मथस्य रथः द्वाभ्यामपि चक्राभ्यां कुण्डलरूपाभ्यामिति भावः, चङ्क्रमितः पुनः पुनरतिशयेन चलितः ॥ १८ ॥

तस्याः नयने जात्यं सुजातमित्यर्थः, यत् अञ्जनं कज्जलं तेन जनितं प्रसाधनम् अलङ्करणं ययोः तथाभूते जाते, पञ्चबाणस्य कामस्य नवौ कुवलये नीलोत्पले शिलीमुखौ शरौ उत्पुङ्खितौ सज्जितौ । कुवलयानां नेत्रसाम्येन कामोद्दीपकत्वेन उत्पुङ्खितत्वमिति व्यज्यते ॥ १९ ॥

कुटिलानां भङ्गिमताम् अलकानां कुन्तलानां माला समूहः ललाटफलकं भालदेशः तस्य अग्रस्य संसर्गः अस्ति यस्याः तथाभूता रचिता कृता, केशपाशः संयमित इत्यर्थः । तत् तदा मध्ये स्थितः कृष्णसारः कृष्णमृगः शशिबिम्बस्य

विदूषकः। [सक्रोधमिव]। भो! मए सव्वालंकारमण्डिदा वण्णिदा। तुमं उण जलविलुत्तप्पसाहणं ज्जेव्व सुमरसि, ता किं ण सुदं देवेण? (ग)।—

णिसग्गचंगस्स वि माणुसस्स
सोहा समुम्मीलदि भूसणेहिं।
मणीणं जच्चाणं वि कंचणेहिं
विहूसणे मज्जदि कावि लच्छी ॥*॥२५॥

राजा। मुद्धाणं णाम हिअआइं हरंति हंत!
णेवच्छकप्पणगुणेण णिदंबिणीओ।
छेआ उणो पकिदिचंगिमभाविणिज्जा
दक्खारसो ण महुरिज्जइ सक्कराए ॥†॥२६॥

* भोः! मया सर्वालङ्कारमण्डिता वर्णिता। त्वं पुनर्जलविलुप्तप्रसाधनामेव स्मरसि, तत् किं न श्रुतं देवेन?—

निसर्गचङ्गस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः।
मणीनां जात्यानामपि काञ्चनैर्विभूषणे मज्जति काऽपि लक्ष्मीः॥

† मुग्धानां नाम हृदयानि हरन्ति हन्त!
नेपथ्यकल्पनगुणेन नितम्बिन्यः।
छेकाः पुनः प्रकृतिचङ्गिमभावनीया
द्राक्षारसो न मधुरीयति शर्करया॥

(ग) सर्वैः अलङ्कारैः मण्डिता शोभिता। जलेति।—जलेन स्नानीयेनेति यावत्, विलुप्तम् अपमृष्टं प्रसाधनं यस्याः तथोक्ताम्।

निसर्गतः स्वभावतः चङ्गस्यापि सुन्दरस्यापि मानुषस्य शोभा भूषणैः समुन्मीलति समुद्भासते। जात्यानां सुजातानामपि मणीनां रत्नानां काञ्चनैः विभूषणे अलङ्करणे सति काऽपि अनिर्वचनीया लक्ष्मीः मज्जति संक्रमति, समुद्भासते इत्यर्थः॥ २५॥

हन्त! खेदे नितम्बिन्यः प्रशस्तनितम्बाः कान्ताः नेपथ्यस्य सुपरिच्छदस्य कल्पन-गुणेन रचनागुणेन मुग्धानां मूढानाम्, अविदग्धानामित्यर्थः, "मुग्धः सुन्दरमूढयोः" इति कोषः; हृदयानि हरन्ति मोहयन्ति, पुनः किन्तु छेकाः विदग्धाः, "छेको

विचक्षणा। जधा देवेणादिट्ठं—

थोआणं थणआणं कसणकलिआलंबीणं अच्छीणं वा
भूचंदस्स मुहस्स कंतिसरिआसोत्तस्स गत्तस्स अ।
को णेवच्छकलाहिं कीरदि गुणो? जं तं वि सव्वं पिअं
संजुत्तं सुणु तत्थ कारणमिणं रूढीअ का खण्डणा? ॥ * ॥ २७ ॥

राजा। [ विदूषकमुद्दिश्य ]। सुप्पांजल कविंजल! एस सिक्खावीअसि। (त)—

* यथा देवेनादिष्टम्—
स्तोकानां स्तनानां कर्णकलिकालम्बिनोरक्ष्णोर्वा
भूचन्द्रस्य मुखस्य कान्तिसरित्स्रोतसो गात्रस्य च।
को नेपथ्यकलाभिः क्रियते गुणो? यद्यदपि सर्वं प्रियं
संयुक्तं शृणु तत्र कारणमिदं रूढेः का खण्डना? ॥
† सुप्राञ्जल कपिञ्जल! एष शिक्ष्यसे—

विदग्धः" इति दर्पणः, प्रकृत्या स्वभावेन यः चङ्गिमा सौन्दर्यं तेन भावनीया स्मरणीयाः। तथाहि द्राक्षारसः शर्करया तत्संयोगेनेति भावः, न मधुरीयति न माधुर्यं प्राप्नोति, यतः मधुर एव स इति भावः॥ २६॥

स्तोकानामिति।—स्तोकानां पीनानां स्तनानां, कर्णकलिकालम्बिनोः श्रवण-कोरकान्तगामिनोः, आकर्णकृष्टयोरिति भावः, अक्ष्णोर्नयनयोर्वा, भुवः पृथिव्याः चन्द्रस्य आह्लादकस्येति भावः, मुखस्य, कान्तिसरित्स्रोतसः कान्तिप्रवाहं वहत इति भावः, गात्रस्य अङ्गस्य च, नेपथ्यकलाभिः वेशरचनाभिः को गुणः अलङ्कारः क्रियते? न केनापीति शेषः, न कोऽपि गुणो भवतीति भावः। तत्र गुणाभावे हेतुः, इदं कारणं शृणु यत् यद्यपि सर्वं प्रियं शोभनमलङ्कारजातमिति भावः, संयुक्तं मिलितं, तत्तदङ्गेष्विति भावः, तत् तदा रूढेः प्रसिद्धेः का खण्डना? निरसनम्? रूढिर्योगमपहरतीति यथा रूढेर्योगापहारिता नास्ति, तथा तादृशसौन्दर्यशालिनी भूषणानपेक्षैवेति भावः॥ २७॥

(त) सुप्राञ्जल! अतिसरल! शिक्ष्यसे उपदिश्यसे, विचक्षणयेति शेषः। परिहासोक्तिरियम्।

[विचिन्त्य] ता अदिणिउणा वि कुविदा देवी। पाइआ जोह्णमज्जारिआ दुद्धं त्ति तक्कं। † (थ)

राजा। को अण्णो तुम्हाहिंतो मह कज्जसज्जो? को अण्णो चंदाहिंतो समुद्दवड्ढणणिट्ठो? *। (द)

[इति परिक्रम्य कदलीगृहप्रवेशं नाटयतः]

विदूषकः। इअं उत्तुंगफटिअमणिवेदिआ, ता इह उवविसदु पिअवअस्सो। †

[राजा तथा करोति]।

विदूषकः। [उन्नमय्य]। भो! दीसदु पुण्णिमाचंदो। ‡

राजा। [विलोक्य]। अए! दोलारूढाए मह वल्लहाए वअणं पुण्णिमाचंदो त्ति णिद्दिसासि। [समन्तादवलोक्य]।—

चिन्तयित्वा आत्मगतम्। तदतिनिपुणाऽपि कुपिता देवी। पायिता ज्योत्स्नामार्जारिका दुग्धमिति तक्रम्।

* कोऽन्यो युष्मत्तो मम कार्यसज्जः? कोऽन्यश्चन्द्रतः समुद्रवर्द्धननिष्ठः?।

† इयमुत्तुङ्गस्फटिकमणिवेदिका, तदत्रोपविशतु प्रियवयस्यः।

‡ भोः! दृश्यतां पूर्णिमाचन्द्रः।

§ अये! दोलारूढाया मम वल्लभाया वदनं पूर्णिमाचन्द्र इति निर्दिशसि।

(थ) हिन्दोलनचतुर्थी दोलोत्सवचतुर्थी। मरकतकुञ्जपथेन मरकतकुञ्जो नाम धामादिविशेषः। "मरकतपुञ्ज" इति पाठान्तरम्। हिन्दोलन्ती दोलायमाना। अतिनिपुणाऽपि अतिचतुराऽपि। कुपिता विप्रलब्धा, अस्माभिरिति शेषः। ज्योत्स्नामार्जारिका चन्द्रा बिडाली। दुग्धमिति ज्ञापयित्वेति भावः। तक्रं "घोल" इति प्रसिद्धम्।

(द) युष्मत्तः अन्ययोगे पञ्चमी, युष्मद्भ्य इत्यर्थः। कार्यसज्जः कार्येषु तत्परः। चन्द्रतः चन्द्रात्। समुद्रेति।—समुद्रस्य वर्द्धने वृद्धिसम्पादने निष्ठा आवेशः यस्य तथोक्तः।

अवि अ—

रणंतमणिणेउरं झणझणंतहारच्छडं
कलक्कणिदकिंकिणीमुहरमेहलाडंबरं।
विलोलवलआवलीजणिदमंजुसिंजारवं
ण कस्स मणमोहणं ससिमुहीअ हिंदोलणं? ॥ * ॥३२॥

विदूषकः। भो! सुत्तआरो तुमं। अहं उण वित्तिआरो भविअ वित्थरेण वण्णेमि। (ध)—

* अपि च—

रणन्मणिनूपुरं झणझणायमानहारच्छटं
कलक्वणितकिङ्किणीमुखरमेखलाडम्बरम्।
विलोलवलयावलीजनितमञ्जुशिञ्जारवं
न कस्य मनोमोहनं शशिमुख्या हिन्दोलनम्? ॥

† भोः! सूत्रकारस्त्वम्। अहं पुनर्वृत्तिकारो भूत्वा विस्तरेण वर्णयामि।—

वेगेन गच्छत् यत् सुरतरुण्याः देवाङ्गनायाः विमानं तदनुरूपं यथा तथा वहन्तो चलन्तो, प्राकारं लङ्घयन्तो अतिक्रामन्तो, तथा रथवशात् वेगवन्तः उद्गमन्तो ऊर्ध्वं गच्छन्तो, नमन्तो अधोभवन्तो, कर्णोत्कर्षणैः आकर्षणेन त्यागेन चेति यावत्, आयान्तो आगच्छन्तो, समीपमिति भावः, यान्तो गच्छन्तो, दूरमिति भावः, दोला जनानां मनोहरणं करोति ॥ ३१ ॥

रणन्ति ध्वनन्ति मणिनूपुराणि यत्र तथोक्तं, झणझणायमाना हारच्छटा हारावली यस्मिन् तथाविधं, कलं मधुरं क्वणितं यासां तथाभूताः याः किङ्किण्यः क्षुद्रघण्टिकाः ताभिः मुखरः सशब्दः मेखलायाः रशनायाः आडम्बरः विस्तारः यस्मिन् तादृशं, विलोलाभिः चपलाभिर्वलयावलीभिः जनितः मञ्जुः मनोज्ञः शिञ्जारवः यस्मिन् तथाविधं, शशिमुख्याः चन्द्रवदनायाः हिन्दोलनं कस्य जनस्य न मनोमोहनम्? मनोरञ्जनम्? अपितु सर्वस्यैव जनस्य मनो मोहयति इत्यर्थः ॥ ३२ ॥

(ध) सूत्रं करोतीति सूत्रकारः। "स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥" इत्युक्तलक्षणसूत्रप्रणेतेत्यर्थः। वृत्तिकारः भाष्यकारः, सूत्रस्य स्वल्पाक्षरत्वेन अर्थगौरवात् सर्वेषामनायासेन बोधः स्यादिति तत्परिष्कारार्थं स्पष्टतरव्याख्याकृदिति भावः।

इत्थं वण्णाणं रेहा विहरइ हरिणीचंचलाक्खी अ एसा
कंदप्पो दीहदप्पो जुअजणजअणे पुण्णलक्खो व्व भादि ॥*॥४१॥

विदूषकः। एदं तं मरगअकुंजं। इह उवविसिअ पिअवअस्सो पडिवालेदु तं। संझा वि मसिणिदा वट्टदि। †

[ उभौ तथा कुरुतः ]।

राजा। अदिसिसिरं वि हिमाणिं संदावदाइणिं (प) अणुहवामि। ‡

विदूषकः। ता लच्छीमहंघरो खणं चिट्ठदु देवो, जाव अहं सिसिरोवआरसामग्गिं (फ) संपादेमि। [ इति नाट्येन निष्क्रम्य

* मांसलो बालमृदा नवघटनसुवर्णोज्ज्वला यष्टिः
दृष्टिर्बालेन्दुरेखाधवलिमजयिनी कुन्तलाः कज्जलाभाः।
इत्थं वर्णानां रेखा विहरति हरिणीचञ्चलाक्षी चैषा
कन्दर्पो दीर्घदर्पो युवजनजये पूर्णलक्ष्य इव भाति ॥

† एतन्मरकतकुञ्जम्। इहोपविश्य प्रियवयस्यः प्रतिपालयतु ताम्। सन्ध्याऽपि मसृणिता वर्तते।

‡ अतिशिशिरामपि हिमानीं सन्तापदायिनीमनुभवामि।

मांसल इति।—बालमृदा अंशावयवः मांसलो मांसलावयवेति यावत्, अङ्गयष्टिः नवं घटनं निर्माणं यस्य तादृशं यत् सुवर्णं काञ्चनं तद्वत् उज्ज्वला, दृष्टिः बालायाः नूतनायाः इन्दुरेखायाः चन्द्रकलायाः धवलिमानं शुभ्रत्वं जयतीति तथोक्ता, कुन्तलाः केशाः कज्जलाभाः अञ्जननिभाः, गाढनीला इत्यर्थः, इत्थम् एवरूपा, वर्णनीयेति भावः, वर्णानां रूपाणां रेखा माधुरी विहरति विलसति, एतस्या इति शेषः, एषा च हरिणीवत् चञ्चले चपले अक्षिणी नयने यस्याः तथोक्ता, विहरतीत्यनेनान्वयः; अतः दीर्घः महान् दर्पो यस्य तथाभूतः कन्दर्पः कामः युवजनानां जये पूर्णलक्ष्य इव पूर्णः लक्ष्यः अभिलाष इति यावत् यस्य तथाभूत इव भाति राजते, कन्दर्पस्त्रिभुवनविजयी भविष्यतीति मन्ये इति भावः। "दीर्घदर्पो" इति पाठे—दीर्घं द्रक्ष्यतीति तथेत्यर्थः ॥ ४१ ॥

(प) हिमानी हिमसंहतिः ताम्। सन्तापदायिनीं, विरहादिति भावः।

विदूषकः। (उपसृत्य) भोदि! किं एदं ?।

विचक्षणा। णिम्मिदोवआरसामग्गी। †

विदूषकः। कस्स किदे ?। ‡

विचक्षणा। प्पिअसहीए किदे। §

विदूषकः। ता मह्म वि अद्धं देहि। ¶

विचक्षणा। किं णिमित्तं ?। **

विदूषकः। महाराअस्स किदे। ††

विचक्षणा। किं उण कारणं तस्स ?। ‡‡

विदूषकः। कप्पूरमंजरीए वि किं ?। §§

विचक्षणा। किं ण जाणासि महाराअस्स दंसणं ?। ¶¶

विदूषकः। तुमं वि किं ण जाणासि महाराअस्स कप्पूरमंजरीए दंसणं ?। ***

[इत्युभौ चलतः]।

विचक्षणा। ता कहिं महाराओ ?। †††

---

* भवति! किमेतत् ?।

† निर्मितोपचारसामग्री।

‡ कस्य कृते ?।

§ प्रियसख्याः कृते।

¶ तन्मह्यमपि अर्धं देहि।

** किं निमित्तम् ?।

†† महाराजस्य कृते।

‡‡ किं पुनः कारणं तस्य ?।

§§ कर्पूरमञ्जर्या अपि किम् ?।

¶¶ किं न जानासि महाराजस्य दर्शनम् ?।

*** त्वमपि किं न जानासि महाराजस्य कर्पूरमञ्जर्या दर्शनम् ?।

††† तत् कुत्र महाराजः ?।

[ ततः प्रविशति विशेषभूषिताङ्गी कर्पूरमञ्जरी ] ।

कर्पूरमञ्जरी । कहिं उण विअक्खणा ? । *

विचक्षणा । [ तामुपसृत्य ] । सहि ! करीअदु देवीए समादिट्ठं । †

राजा । वअस्स ! किं उण तं ? । ‡

विदूषकः । तमालविडवांतरिदो जाण । §

[ राजा तथा करोति ] ।

विचक्षणा । एस कुरबअतरू । ¶

[ कर्पूरमञ्जरी तमालिङ्गति ] ।

राजा । णवकुरबअरुक्खो कुंभथोरत्थणीए
रहसविरइदेण णिब्भरालिंगणेण ।
तह कुसुमसमिद्धिं लंभिदो मंदरीए
जह भमरकुलाणं तत्थ जत्ता पउत्ता ॥ **॥ ४४ ॥

विदूषकः । भो ! पेक्ख पेक्ख महिंदजालं ( ख ), जेण— ††

---

* क्व पुनर्विचक्षणा ? ।

† सखि ! क्रियतां देव्या समादिष्टम् ।

‡ वयस्य ! किं पुनस्तत् ? ।

§ तमालविटपान्तरितो जातोऽस्मि ।

¶ एष कुरबकतरुः ।

** नवकुरबकवृक्षः कुम्भस्तन्या
रभसविरचितेन निर्भरालिङ्गनेन ।
तथा कुसुमसमृद्धिं लम्भितः सुन्दर्या
यथा भ्रमरकुलानां तत्र यात्रा प्रवृत्ता ॥

†† भोः ! प्रेक्षस्व प्रेक्षस्व महेन्द्रजालं, येन—

---

नवकुरबकवृक्षः कुम्भाविव स्थूलौ पीनौ स्तनौ यस्याः तथोक्ता तस्याः सुन्दर्याः रभसविरचितेन सहसा कृतेन निर्भरालिङ्गनेन गाढाश्लेषेण तथा कुसुमानां समृद्धिं सम्पदं लम्भितः प्रापितः, यथा भ्रमरकुलानां भ्रमरावलीनां तत्र कुसुमसमृद्धौ यात्रा गतिः सहसा प्रवृत्ता ॥ ४४ ॥

(ख) महेन्द्रजालं महत् इन्द्रजालं चमत्कारविधायिनी कापटिकी विद्या तत् ।

बालोवि कुरवअतरू तरुणीए गाढमुवगूढो ।
सहसत्ति पुप्फणिअरं मअणसरं विअ समुग्गिरइ ॥ * ॥ ४५ ॥

राजा । इदिसो ज्जेव्व दोहदअस्स प्पभावो ।

विचक्षणा । अअं एसो तिलअद्दुमो । †

[ कर्पूरमञ्जरी चिरं तिर्य्यगवलोकयति ] ।

राजा ।—

तिक्खाणं तरलाणं कज्जलकलासंवग्गिदाणं पि से
पास्से पंचसरं सिलीमुहधरं णिच्चं कुणंताणं अ ।
णेत्ताणं तिलअद्दुमे णिवडिदा धाडी मिअच्छीअ जं
तं सो मंजरिपुंजदंतुरसिरो रोमांचिदो व्व ट्ठिदो ॥ ‡ ॥ ४६ ॥

बालोऽपि कुरवकतरुस्तरुण्या गाढमुपगूढः ।
सहसेति पुष्पनिकरं मदनशरमिव समुद्गिरति ॥

* ईदृश एव दोहदस्य प्रभावः ।

† अयमेव तिलकद्रुमः ।

‡ तीक्ष्णयोस्तरलयोः कज्जलकलासंवल्गितयोरप्यस्याः
पार्श्वं पञ्चशरं शिलीमुखधरं नित्यं कुर्वतोश्च ।
नेत्रयोस्तिलकद्रुमे निपतिता धाटी मृगाक्ष्या यत
तत् स मञ्जरीपुञ्जदन्तुरशिरा रोमाञ्चित इव स्थितः ॥

बाल इति ।—बालोऽपि शिशुरपि कुरवकतरुः तरुण्या युवत्या अनया गाढम् उपगूढः आलिङ्गितः सन् सहसेति सहसैव, इति-शब्दोऽवधारणार्थः, पुष्पाणां निकरं समूहं मदनशरमिव समुद्गिरति समुद्वमति ॥ ४५ ॥

तीक्ष्णयोरिति ।—तीक्ष्णयोः दीर्घाग्रभागयोः तरलयोश्चञ्चलयोः अपि, तथा कज्जलकलया अञ्जनरेखया संवल्गितयोः अलङ्कृतयोरिति भावः, अत एव नित्यं सततं शिलीमुखधरं शरधरं पञ्चशर कामं कुर्वतोश्च अस्याः मृगाक्ष्याः नेत्रयोः धाटी दर्शनव्यापारविशेष, यत् यतः पार्श्वे पार्श्वस्थिते तिलकद्रुमे निपतिता, तत् तस्मात् स तिलकद्रुमः मञ्जरीणां पुञ्जैः समूहैः दन्तुराणि उच्चावचानीव शिरांसि अग्राणि यस्य तथाभूतः, अत एव रोमाञ्चित इव सञ्जातरोमाञ्च इव स्थितः स्थित इति ॥ ४६ ॥

विचक्षणा । एसो असोअसाही । *

[ कर्पूरमञ्जरी चरणताडनं नाटयति ] ।

राजा । असोअतरुताडणं रणिदणेउरेणंघिणा

किदं अ मिअलंछणच्छविमुहीअ हेलोल्लसं ।

सिहासु सअलासु वि त्थवअमंडणाडंबरं

ठिदं अ गअणंगणं जणणिरिक्खणिज्जं कवणं ॥ † ॥ ४० ॥

विदूषकः । भो वअस्स ! जं सच्चं ण किदं दोहदअदाणं देवीए, जाणेसि एत्थ किं कारणं ? । ‡

राजा । तुमं जाणेसि ? । §

विदूषकः । भणामि, जइ देवो ण कुप्पदि । ¶

राजा । को एत्थ रोसावसरो ? । भण उम्मुद्दिआए जीहाए । **

* एष अशोकशाखी ।

† अशोकतरुताडनं रणितनूपुरेणाङ्घ्रिणा

कृतञ्च मृगलाञ्छनच्छविमुख्या हेलोल्लासम् ।

शिखासु सकलास्वपि स्तवकमण्डनाडम्बरं

स्थितञ्च गगनाङ्गनं जननिरीक्षणीयं वनम् ॥

‡ भो वयस्य ! यत् सत्यं न कृतं दोहददानं देव्या, जानासि तत्र किं कारणम् ? ।

§ त्वं जानासि ? ।

¶ भणामि, यदि देवो न कुप्यति ।

** कोऽत्र रोषावसरः ? भण उन्मुद्रितया जिह्वया ।

मृगलाञ्छनश्चन्द्रः तस्येव छविः कान्तिर्यस्य तथाभूतं मुखं यस्याः तयोक्ता तया, रणितः नूपुरो यत्र तादृशेन च अङ्घ्रिणा चरणेन हेलोल्लासं सविलासमित्यर्थः यथा तथा, अशोकतरोः ताडनम् आघातः कृतञ्च, सकलासु अपि शिखासु स्तवकमण्डनेन स्तवकविन्यासेन आडम्बरः समुल्लासः यस्य तथाभूतं गगनाङ्गनं गगनाजिरं यत्र चर्वेणेत्यर्थः, जनानां निरीक्षणीयं दर्शनीयं वनं स्थितञ्च । अत्र समकालत्वद्योतनार्थम् ॥ ४० ॥

विदूषकः।—

इह जइ वि कामिणीणं सुंदेरं धरइ णवअवआणं सिरी।
अहिदेवदे व्व णिवसइ तह वि क्खु तारुण्णए लच्छी॥ * ॥४८॥

राजा। सुणिदो दे अहिप्पाओ। किं उण किं वि भणामो—
बालाअ होंति कोदूहलेण एअमेअ चवलचित्ताओ।
ऊरलासिदथणीसु पुणो णिवसइ मअरद्धअरहस्सं॥ † ॥४९॥

विदूषकः। तरुणो वि रूअरेहारहस्सेण फुल्लंति, ण उण रइरहस्सं जाणंति। ‡ (अ)

[ नेपथ्ये ]।

वैतालिकः। सुहसंझा भोदु देवस्स—

---

* इह यद्यपि कामिनीनां सौन्दर्य्यं धारयत्यवयवानां श्रीः।
अधिदेवतेव निवसति तथाऽपि खलु तारुण्ये लक्ष्मीः॥

† श्रुतस्तेऽभिप्रायः। किं पुनः किमपि भणामः—
बाला भवन्ति कौतूहलेनैवमेवं चपलचित्ताः।
उरल्लसितस्तनीषु पुनर्वसति मकरध्वजरहस्यम्॥

‡ तरवोऽपि रूपरेखारहस्येन विकसन्ति, न पुनः रतिरहस्यं जानन्ति।

§ सुखसन्ध्या भवतु देवस्य—

---

इह संसारे यद्यपि कामिनीनाम् अवयवानाम् अङ्गानां श्रीः सौन्दर्य्यं धारयति, यौवनापगमेऽपीति शेषः, तथाऽपि तारुण्ये यौवने लक्ष्मीः श्रीः अधिदेवतेव अधिष्ठात्री देवीव निवसति तिष्ठति। देवी गतयौवना, इयन्तु प्राप्तयौवनेति भावः॥ ४८॥

बालाः नवयुवत्यः कौतूहलेन यौवनफलं कदमास्वादयामिति औत्सुक्येन एवम् एवं चपलचित्ताः तरलहृदयाः, अधीरा इति भावः, भवन्ति। पुनः किन्तु उरम् अल्पं उल्लसितौ लाञ्छितौ, स्तनावित्यर्थः, स्तनौ यासां तथाविधासु, प्रगल्भास्विति भावः, मकरध्वजस्य रहस्यं गूढाभिप्रायं, रतिसर्वस्वमिति यावत्, निवसति॥ ४९॥

(अ) तरवः वृक्षा अपि, किं वक्तव्यं मानवा इति भावः, रूपस्य सौन्दर्य्यस्य रेखा कैचित्यं, तस्याः रहस्येन गूढाभिप्रायेणेत्यर्थः, विकसन्ति समुन्मीलन्ति।

लोआणं लोअणेहिं सह कमलवणं अद्धणिद्दं कुणंतो
मुंचंतो तिक्खभावं सह अ सरभसं माणिणीमाणसेहिं।
मंजिट्ठारत्तसुत्तच्छविकिरणचओ चक्कवाएक्कमित्तो
जादो अत्थाचलत्थो सपदि दिणमणी पक्कणारंगपिंगो ॥ § ॥५०॥

राजा। भो वअस्स! संणिहिदो संझासमओ वट्टदि। *

विदूषकः। संकेअकालो कहिदो वंदीहिं। †

कर्पूरमञ्जरी। सहि विअक्खणे! गमिस्सं दाव, विआलो संवुत्तो वट्टदि। ‡

विचक्षणा। एव्वं करीअदु। §

[ इति परिक्रम्य निष्क्रान्ताः सर्वे ]।

इति द्वितीयजवनिकान्तरम्।

लोकानां लोचनैः सह कमलवनमर्द्धनिद्रं कुर्वन्
मुञ्चंस्तीक्ष्णभावं सह च सरभसं मानिनीमानसैः।
माञ्जिष्ठारक्तसूत्रच्छविकिरणचयश्चक्रवाकैकमित्रं
जातोऽस्ताचलस्थः सपदि दिनमणिः पक्वनारङ्गपिङ्गः॥

* भो वयस्य! संनिहितः सन्ध्यासमयो वर्त्तते।

† सङ्केतकालः कथितो वन्दिभिः।

‡ सखि विचक्षणे! गमिष्यामि तावत्। विकालः संवृत्तो वर्त्तते।

§ एवं क्रियताम्।

मञ्जिष्ठया रागद्रव्यभेदेन रक्तं यत् सूत्रं तद्वत् छविः प्रभा यस्य तथाविधः, किरणचयः मयूखनिवहः यस्य तथोक्तः, चक्रवाकानाम् एकं मुख्यं मित्रं सुहृत्, "एके मुख्यान्यकेवलाः" इत्यमरः; निशि चक्रवाकानामन्योऽन्यविरहादिति भावः, पक्वं परिणतं यत् नारङ्गं फलविशेषः तद्वत् पिङ्गः पीतरक्त इत्यर्थः, दिनमणिः सूर्यः लोकानां लोचनैः नेत्रैः सह कमलवनम् अर्द्धा निद्रा यस्य तथोक्तं निमीलितप्राय-मिति यावत्, कुर्वन्, मानिनीनां मानसैः सह सरभसं सवेगं, प्रबलमित्यर्थः, तीक्ष्णभावं मुञ्चन् त्यजन्, सन्ध्यायां यथा मानिन्यः कान्ताः प्रियेषु तीक्ष्णभावं मानवशात् रूक्षतां त्यजन्ति तथा निजम् उत्तापं परिहरन्निति यावत्, सपदि अस्ताचलस्थः अस्ताचलं जिगमिषु-रित्यर्थः जातः ॥ ५० ॥

# अथ तृतीयजवनिकान्तरम् ।

[ ततः प्रविशति राजा विदूषकश्च ]।

राजा। [ तामनुस्मृत्य ]।—

दूरे किज्जदु चंपअस्स कलिआ कज्जं हलिद्दाअ किं ?
उत्तत्तेण अ कंचणेण गणणा का णाम जच्चेण वि ।
लावण्णस्स णवुग्गदंदुमहुरच्छाअस्स तिस्सा पुरो
पच्चग्गेहिं वि केसरस्स कुसुमक्केरेहिं किं कारणं ? ॥ १ ॥

अवि अ—

मरगअमणिजुट्टा हारजट्ठि व्व तारा
भमरकवलिअङ्गा मालईमालिए व्व ।
रहसवलिअकंठो तीअ दिट्ठो वरिट्ठा
सवणपहणिविट्ठा माणसं मे पविट्ठा ॥*॥२ ॥

दूरं क्रियतां चम्पकस्य कलिका कार्य्यं हरिद्रायाः किम् ?
उत्तप्तेन च काञ्चनेन गणना का नाम जात्येनापि ? ।
लावण्यस्य नवोद्गतेन्दुमधुरच्छायस्य तस्याः पुरः
प्रत्यग्रैरपि केसरस्य कुसुमोत्करैः किं कारणम् ? ॥

अपि च—

मरकतमणिजुष्टा हारयष्टिरिव तारा
भ्रमरकवलिताङ्गी मालतीमालिकेव ।

चम्पकस्य कलिका दूरे क्रियतां दूरीक्रियतां, हरिद्रायाः कार्य्यं किम् ? न किमपीत्यर्थः। नवोद्गतस्य नवोदितस्य इन्दोश्चन्द्रस्येव मधुरा मनोहारिणी छाया कान्तिर्यस्य तथाविधस्य, तस्याः कर्पूरमञ्जर्य्याः लावण्यस्य "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणस्य पुरः अग्रतः जात्येनापि सुजातेनापि, विशुद्धेनापीत्यर्थः, उत्तप्तेन ज्वलता काञ्चनेन का नाम गणना ? विचारः ? न कोऽपि इत्यर्थः। प्रत्यग्रैरपि नवैरपि केसरस्य बकुलस्य कुसुमोत्करैः पुष्पसमूहैः किं कारणम् ? फलम् ? न किमपीत्यर्थः। चम्पककलिका हरिद्रा तप्तकाञ्चनं केसरकुसुमञ्च तल्लावण्येन नोपमीयते इति भावः ॥ १ ॥

विदूषकः। भो वअस्स! किं तुमं भज्जाजिदो विअ किंपि किंपि कुरकुराअंतो चिट्ठसि?। * (क)

राजा। वअस्स! सिविणअं दिट्ठमणुसंधेमि। † (ख)

विदूषकः। ता कहेदु प्पिअवअस्सो। ‡

राजा।—

जाणे पंकरुहाणणा सिविणए मं केलिसज्जागदं

कंदोट्टेण तडित्ति ताडिदुमणा हत्थंतरे संठिदा।

ता कोड्डेण मए वि झत्ति धरिदा ठिल्लं वसिल्लंचले

तं मोत्तूण गदं अ तीअ सहसा णट्ठा अ णिद्दा वि मे॥§॥ २॥

रभसवलितकण्ठो तस्या दृष्टिर्धवला

श्रवणपथनिविष्टा मानसं मे प्रविष्टा॥

* भो वयस्य! किं त्वं भार्य्याजित इव किमपि किमपि कुरकुरायमाणस्तिष्ठसि?।

† वयस्य! स्वप्नं दृष्टमनुसन्दधामि।

‡ तत् कथयतु प्रियवयस्यः।

§ जाने पङ्करुहानना स्वप्ने मां केलिशय्यागतम्

इन्दीवरेण झटिति ताडितुमना हस्तान्तरे संस्थिता।

तत् कौतूहलेन मयाऽपि झटिति धृता शिथिलं वस्त्राञ्चले

तन्मोचयित्वा गतं तया च सहसा नष्टा च निद्राऽपि मे॥

तस्याः रभसेन वेगेन हर्षेण वा वलितः आकृष्टः कण्ठः कण्ठावलम्बनमिति भावः यथा तथोक्ता, दर्शनमात्रेणैव प्रशंसनीयेति भावः, धवला उत्कृष्टा दृष्टिः शरत्समयिकया ज्योत्स्नया हरिणाङ्कितया जुष्टा युक्ता तारा महती शारदनिशेव, भ्रमरैव कवलितं यत्तम् यद्वा यस्याः तथाभूता मालतीमालिकेव, श्रवणपथनिविष्टा स्वस्य कर्णपथं प्रविष्टा, आकर्णकृष्टेत्यर्थः, मे मम मानसं प्रविष्टा। सततमेव मनसा तद्ध्यानं पश्यामीति भावः॥ २॥

(क) भार्य्याजित इव भार्य्यावशंवद इव, स्त्रैण इवेत्यर्थः।

(ख) अनुसन्दधामि अनुस्मरामीत्यर्थः।

जाने इति।—जाने स्मरामीत्यर्थः, पङ्करुहानना पङ्कजमुखी सा स्वप्ने केलिशय्यागतं क्रीडातल्पशायिनं माम् इन्दीवरेण नीलोत्पलेन, नयनेनेति भावः, ताडितुमनाः

विदूषकः। [स्वगतम्]। भोदु एव्वं दाव। [प्रकाशम्]। भो वअस्स! अज्ज मए वि सिविणं दिट्ठं। *

राजा। [सप्रत्याशम्]। ता कहिज्जदु कीरिसं तं सिविणअं?। †

विदूषकः। अज्ज जाणे, सिविणए सुरसरिस्रोत्ते सुत्तोम्हि, ता हरसिरसोवरि दिण्णलोलाचलणाए गंगाए पक्खालिदोम्हि तोएण। ‡ (ग)

राजा। तदो तदो?। §

विदूषकः। तदो सरअसमअवरिसिणा जलहरेण जहिच्छं पीदोम्हि। ¶ (घ)

राजा। अच्छरिअं!! अच्छरिअं!! तदो तदो?। **

विदूषकः। तदो रत्तिणक्खत्तगंट भअवइ मत्तंड (ङ) तम्मवम्मो-

* भवतु एवं तावत्। भो वयस्य! अद्य मयाऽपि स्वप्नो दृष्टः।

† तत् कथ्यतां कीदृशः स स्वप्नः?।

‡ अद्य जाने, स्वप्ने सुरसरित्स्रोतसि सुप्तोऽस्मि; तद्धरशिरस उपरि दत्तलोला-चरणाया गङ्गायाः प्रक्षालितोऽस्मि तोयेन।

§ ततस्ततः?।

¶ ततः शरत्समयवर्षिणा जलधरेण यथेच्छं पीतोऽस्मि।

** आश्चर्यमाश्चर्यम्!! ततस्ततः?।

सङ्कुचितमित्यर्थः, झटिति सहसैवेत्यर्थः, हस्तान्तरं मंस्थिता संप्रवृत्ता, तत् तदा मयाऽपि कौतूहलेन झटिति वस्त्राञ्चलं वसनप्रान्ते शिथिलं यथा तथा धृता, तथा तत् मम चारुचरित्रार्थः, मोचयित्वा सहसा गतं प्रस्थितं, मे मम निद्राऽपि नष्टा च। चरयं समकालत्वद्योतनार्थम् ॥ २ ॥

(ग) सुरसरितः गङ्गायाः स्रोतसि प्रवाहे। तत् तदा हरस्य शिरस उपरि दत्तः निहितः लीलया चरणो यया तथाभूतायाः।

(घ) पीतोऽस्मि निगिलितोऽस्मि।

(ङ) मार्तण्डे सूर्ये।

णईसंगदं समुद्दं गदो महामेहो ; जाणे, अहं वि मेहगब्भट्ठिदो गच्छेमि । ††

राजा । तदो तदो ? । *

विदूषकः । तदो सो तहिं थूलजलबिंदूहिं वरिसिदुं पउत्तो । अहं अ रअणाअरसुत्तीहिं मुत्ताणामहेआहिं संपुडं समुग्घाडिअ जलबिंदूहिं समं पीदोम्हि ; ताणं अ दसमाससमाणं मोत्ताहलं भविअ गब्भे ट्ठिदो । † (च)

राजा । तदो तदो ? । ‡

विदूषकः ।—

तदो चउस्सट्ठिसु सुत्तिसु ट्ठिदो
घणंबुबिंदूजिदवंसरोअणो ।
सुवत्तुलं णित्तलमच्छमुज्जलं
कमेण पत्तो णवमुत्तिअत्तणं ॥ § ॥४॥

†† ततः स्वातीनक्षत्रगते भगवति मार्तण्डे ताम्रपर्णीनदीसङ्गतं समुद्रं गतो महामेघः ; जाने, अहमपि मेघगर्भस्थितो गच्छामि ।

* ततस्ततः ? ।

† ततोऽसौ तत्र स्थूलजलबिन्दुभिर्वर्षितुं प्रवृत्तः, अहञ्च रत्नाकरशुक्तिभिर्मुक्तानामधेयाभिः सम्पुटं समुद्घाट्य जलबिन्दुभिः समं पीतोऽस्मि, तासाञ्च दशमासप्रमाणं मुक्ताफलं भूत्वा गर्भे स्थितः ।

‡ ततस्ततः ? ।

§ ततश्चतुःषष्टिषु शुक्तिषु स्थितो घनाम्बुबिन्दुर्जितवंशरोचनः ।
सुवर्तुलं निस्तलमच्छमुज्ज्वलं क्रमेण प्राप्तो नवमौक्तिकत्वम् ॥

(च) असौ महामेघः । रत्नाकरशुक्तिभिः रत्नाकरः समुद्रः तत्र स्थिताः शुक्तयः मुक्तास्फोटाः ताभिः । सम्पुटम् आवरणम् । समुद्घाट्य निर्भिद्य । तासां शुक्तीनाम् । दशमासप्रमाणं दश मासानि "दशार्द्धगुञ्जं प्रवदन्ति माषम्" इति लीलावत्युक्तं प्रमाणं परिमाणं यस्य तथाभूतं पञ्चाशद्गुञ्जामितमिति यावत्, अतिप्रकाण्डमिति भावः ।

घन इति ।—जितं न्यक्कृतं वंशरोचनं तदाख्यं वस्तु येन तथाभूतः ॥ ४ ॥

राजा। तदो तदो ?। *

विदूषकः। तदो मोहमत्ताणं ताणं सुत्तीणं गब्भगश्रं मुत्ताहलत्तणेण मस्सेमि। †

राजा। तदो तदो ?। ‡

विदूषकः। तदो परिणाटे (क) काले समुद्दाहिंतो कड्डिदाओ ताओ सुत्तीओ फाड़िदाओ अ। अहं चउस्सट्टिमुत्तहलत्तणं गदो ट्ठिदो। किणिदो अ एक्केण सेट्ठिणा सुवसलक्खं देइअ। §

राजा। अहो ! विचित्तदा सिविणअस्स। तदो तदो ? ¶

विदूषकः। तदो तेण आणिअ वेधआरणेहिं वेधाविआइं मोत्तिआइं। मम वि ईसीमि वेअणा समुप्पसा। ** (ज)

राजा। तदो तदो ?। ††

विदूषकः। तदो—

तेणावि मुत्ताहलमंडलेण एक्कक्कदाए दसमासिएण।
एक्कावली गंठकमेण गुत्था जा संठिदा कोटिसुवसमुल्ला ॥‡‡॥ ५॥

* ततस्ततः ?।

† ततः मोऽहमात्मानं तासां शुक्तीनां गर्भगतं मुक्ताफलत्वेन मन्ये।

‡ ततस्ततः ?।

§ ततः परिणते काले समुद्रात् कर्षितास्ताः शुक्तयः विदारिताश्च। अहं चतुःषष्टिमुक्ताफलत्वं गतः स्थितः। क्रीतश्चैकेन श्रेष्ठिना सुवर्णलक्षं दत्त्वा।

¶ अहो ! विचित्रता स्वप्नस्य। ततस्ततः ?।

** ततस्तेनानीय वेधकारैर्वेधितानि मौक्तिकानि। ममापीषद्वेदना समुत्पन्ना।

†† ततस्ततः ?।

‡‡ ततः,—

तेनापि मुक्ताफलमण्डलेनैकैकतया दशमासिकेन।
एकावली ग्रन्थिक्रमेण गुम्फिता या संस्थिता कोटिसुवर्णमूल्या ॥

(क) परिणते विगते काले, कियत्कालानन्तरमित्यर्थः।

(ज) तेन श्रेष्ठिना। वेधितानि छिद्रितानि।

राजा। तदो तदो ?। *

विदूषकः। तदो तं करंडिआइ कदुअ (झ) साअरदत्तो णाम वाणिओ गदो पंचालाधिवस्स सिरिवज्जाउहस्स णअरं कण्णउज्जं णाम; तहिं च सा विक्कीणीदा कोडिए सुवण्णस्स। †

राजा। तदो तदो !। ‡

विदूषकः। तदो अ—

दट्ठूण थोरत्थणतुंगिमाणं एक्कावलीए तह चंगिमाणं।
सा तेण दिण्णा दइदाइ कंठे रज्जंति छेआ समसंगमम्मि ॥ ६ ॥

अवि अ—

णहवह्लिदजोण्हाणिब्भरे रत्तिमज्झे
कुसुमसरपहारत्ताससंमीलिदाणं।

* ततस्ततः ?।

† ततस्तां करण्डिकायां कृत्वा सागरदत्तो नाम वणिक् गतः पाञ्चालाधिपस्य श्रीवज्रायुधस्य नगरं कान्यकुब्जं नाम; तत्र च सा विक्रीता कोट्या सुवर्णस्य।

‡ ततस्ततः ?।

§ ततश्च—

दृष्ट्वा स्थूलस्तनतुङ्गिमानमेकावल्यास्तथा चङ्गिमानम्।
सा तेन दत्ता दयितायाः कण्ठे रज्यन्ति च्छेकाः समसङ्गमे ॥

अपि च—

नभोवह्लितज्योत्स्नानिर्भरे रात्रिमध्ये
कुसुमशरप्रहारत्राससंमीलितयोः।

एकैकतया प्रत्यक्षः दक्षमार्गिकेण दक्षमार्षितेन। एकावली एकसरो हारः, तथा ग्रन्थिक्रमेण गणनानुसारेण ॥ ५ ॥

(झ) तान् एकावलीं, करण्डिकायां तदाख्यपात्रविशेषे कृत्वा निधाय।

दृष्टेति।—तेन पाञ्चालाधिपेन वज्रायुधेन स्थूलयोः स्तनयोः, दयितायाः इति भावः, तुङ्गिमानं तुङ्गत्वं, पीनत्वमित्यर्थः, तथा एकावल्याः चङ्गिमानं सौन्दर्यं दृष्ट्वा सा एकावली दयितायाः कण्ठे दत्ता। छेकाः विदग्धाः समसङ्गमे तुल्यसमागमे रज्यन्ति प्रीतिमनुभवन्ति। कण्ठनिधानात् एकावलीस्तनसङ्गमो भविष्यतीति भावः ॥६॥

णिहुवणपरिरंभे णिब्भरुत्तुंगपीण-
त्थणकलसणिवेसा पीड़िदोहं विबुद्धो ॥ § ॥७॥

राजा। [ विचिन्तिअ विचिन्त्य च ]।—

सिविणअमिअं असच्चं तं दिट्ठं मेणुसंधमाणस्स।
पडिसिविणएण तस्स वि णिआरणं तुज्झ अहिप्पाओ ॥*॥८॥

विदूषकः। भट्टो ठक्कुरो, छुहाकिलंतो बम्हणो, अविणीद-हिअआ बालरंडा, विरहिदो अ माणुसो मणोरहमोदएहिं अत्ताणं विडंबेदि। अवि अ वअस्स! पुच्छेमि, कस्स उण एसो प्पहाओ? । † (ञ)

§ निधुवनपरिरम्भे निर्भरोत्तुङ्गपीन-
स्तनकलशनिवेशात्पीडितोऽहं विबुद्धः ॥

* स्वप्नमिममसत्यं तत दृष्टं ममानुसन्दधतः।
प्रतिस्वप्नेन तस्यापि निवारणं तवाभिप्रायः ॥

† भट्टो राजा, क्षुधाक्रान्तो ब्राह्मणः, अविनीतहृदया बालरण्डा, विरहितश्च मानुषो मनोरथमोदकैरात्मानं विडम्बयति। अपि च वयस्य! पृच्छामि, कस्य पुनरेष प्रभावः?।

तमसि आकाशे प्रहलितः प्रसृतः ज्योत्स्नानां चन्द्रिकाणां निर्भरः अतिशयः यस्मिन् तथाभूते, रात्रिमध्ये कुसुमशरस्य कामस्य प्रहारात् बाणेन अर्थेन सम्मिलितयोः मुकुलतयोः, तयोः राजदम्पत्योरिति शेषः, निधुवनं सुरतं तस्मिन् यः परिरम्भः आलिङ्गनं तस्मिन्, निर्भरोत्तुङ्गयोः नितरामुन्नतयोः पीनयोः स्थूलयोः स्तनकलशयोः निवेशात् सम्पातात पीडितः अहं विबुद्धः जागरितः ॥ ७ ॥

स्वप्नमिति।—तत तर्हि इममसत्यम् अलीकं दृष्टं स्वप्नम् अनुसन्दधतः अनु-स्मरतः मम प्रतिस्वप्नेन, त्वदीयेनेति शेषः, तस्यापि अनुस्मरणस्यापि निवारणम् अवहितमिति यावत्, तव अभिप्रायः आशयः ॥ ८ ॥

(ञ) भट्टः उन्मत्त इति भावः। ब्राह्मणः बहुभोजीति भावः। क्षुधया क्रान्तः आर्तः। अविनीतहृदया प्रेमासक्तचित्तेति भावः, बालरण्डा बालिका धूर्ता च।

राजा। प्पेमस्स। *

विदूषकः। भो! देवीगदे प्पणअप्परूढ़े वि प्पेमे किं त्ति कप्पूरमंजरीं सव्वंगवित्थारिदलोअणो पिअंतो विअ अवलोएसि? किं तदो वि परिहीअमाणगुणा देवी?। † (ट)

राजा। मा एव्वं भण—

कदा वि संघडइ कस्स वि प्पेमगंठी
एवमेव तत्थ ण हु कारणमत्थि रूअं।
चंगत्तणं उण मइज्जदि जं तहिं पि
ता दिज्जए पिसुणलोअमुहेसु मुद्दा॥ ‡ ॥ ८ ॥

* प्रेम्णः।

† भोः! देवीगते प्रणयप्ररूढेऽपि प्रेम्णि किमिति कर्पूरमञ्जरीं सर्वाङ्गविस्तारितलोचनः पिबन्निव अवलोकयसि? किं ततोऽपि परिहीयमाणगुणा देवी?।

‡ मैवं भण—

कदाऽपि सङ्घटते कस्यापि प्रेमग्रन्थिः
एवमेव तत्र न खलु कारणमस्ति रूपम्।
चङ्गत्वं पुनर्भज्यते तत्रापि
तद्दीयते पिशुनलोकमुखेषु मुद्रा॥

विरहितः विरहातुर इत्यर्थः, मानुषः नरः, मनोरथमोदकैः सङ्कल्परूपैर्मिष्टद्रव्यैः आत्मानं विडम्बयति प्रतारयति।

(ट) देवीगते देवीनिष्ठे, प्रणयेन स्नेहेन प्ररूढः प्रवृद्धः तस्मिन्, प्रेम्णि विद्यमाने। ततोऽपि कर्पूरमञ्जर्य्या अपि, अपेक्षार्थे पञ्चमी; परिहीयमानाः गुणा यस्याः तथाभूता। "परिहीणप्पमाणगुणा" इति पाठे—परिहीणं प्रमाणं येषां तथाभूता गुणा यस्याः तथोक्ता।

कदाऽपि कस्मिन्नपि काले कस्यापि प्रेमग्रन्थिः प्रेमबन्धः एवमेव सङ्घटते, कस्मिन्नपीति शेषः, तत्र रूपं सौन्दर्य्यं न खलु नैव कारणम् अस्ति, तथाच भवभूतिः,— "व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते। विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥" इति उत्तररामचरिते षष्ठाङ्के १२ श्लोकः; तत्रापि प्रेम्णः आन्तरहेतुकत्वेऽपि

विदूषकः। भो ! किं उण एदं पेम्म पेम्मत्ति भणंति ?।

राजा। अण्णोण्णमिलिदस्स मिहुणस्स मअरद्धअसासणे पअट्टं पणअग्गंठिं पेमेत्ति छइल्ला भणंति। † (ठ)

विदूषकः। कीदिसो सो ?। ‡

राजा। जस्सि विअप्पघडणाइकलंकमुक्को
अत्ताणअस्स सरलत्तणमेइ भावो।
एक्केक्कअस्स पसरंतरसप्पवाहो
सिंगारवड्ढिअमणोभवदिण्णसारो ॥ § ॥ १० ॥

भोः ! किं पुनरेतत् प्रेम प्रेमेति भणन्ति ?।

† अन्योऽन्यमिलितस्य मिथुनस्य मकरध्वजशासने प्रवृद्धं प्रणयग्रन्थिं प्रेमेति विदग्धा भणन्ति।

‡ कीदृशः सः ?।

§ यस्मिन् विकल्पघटनादिकलङ्कमुक्तः आत्मनः सरलत्वमेति भावः।
एकैकस्य प्रसरद्रसप्रवाहः शृङ्गारवर्द्धितमनोभवदत्तसारः ॥

यत् पुनः वक्रत्वं सौन्दर्य्य "वक्रस्तु शामने दर्पे" इत्यमरः सूच्यते मार्ग्यते, तत् सौन्दर्य्य-मार्गस्य पिशुनानां खलानां लोकानां मुखेषु मुद्रा आवरणं दीयते। पिशुनाः यस्मिन् कस्मिन्नपि प्रेमबन्धनं गर्हितं मा मन्यन्तामिति तत् सौन्दर्य्यमाच्छाद्यते, सुन्दर्य्यामाच्छादितायां दीपायेति पिशुनमुखबन्धनाय मया तत्सौन्दर्य्यादिगुणाः कीर्त्यन्ते इति भावः ॥ ९ ॥

(ठ) अन्योऽन्य परस्पर मिलितस्य सङ्गतस्य मिथुनस्य स्त्रीपुंयुगलस्य मकर-ध्वजस्य कामस्य शासने आज्ञायां, तदाज्ञापालने, प्रवृद्धं सञ्जातं प्रणयग्रन्थिं भावबन्धं, प्रेम इति छेका विदग्धाः, विद्वांस इत्यर्थः, "छेकास्तु विदग्धेषु" इति चवमादौ रभसः, भणन्ति कथयन्ति।

यस्मिन् प्रेमणि सति एकैकस्य उभयस्येत्यर्थः, आत्मनः स्वस्य भावः आशयः, "भावोऽभिप्राय आशयः" इत्यमरः ; विकल्पानां संशयानां घटनादयः सम्मेलनादयः ये कलङ्काः दोषाः तैः मुक्तः विरहितः प्रसरन् प्रवहन् रसप्रवाहः आनन्दस्रोतः यस्मिन् तथाभूतः, तथा शृङ्गारेण सुरतेन वर्द्धितः वृद्धिं नीतः यः मनोभवः कामः तेन दत्तः अर्पितः सारः उत्कर्षः यस्य तथाविधः सन्, सरलत्वम् आर्जवम् एति गच्छति, समदुःखसुखत्वं प्राप्नोतीत्यर्थः, स एव प्रेमेति निष्कर्षः ॥ १० ॥

विदूषकः। कधं विअ सो लक्खीअदि ? ।

राजा। जाणं सहावप्पसरंतसुल्लोलदिट्ठी-
पेरंतलुंठिअमणाणं परप्परेण ।
वड्ढंतमम्महविदीण्णरसप्पसारा
ताणं प्पआसइ लहुं विअ चित्तभावो ॥ ११ ॥

अवि अ—

अंतो णिविट्ठमअणविब्भमडंबरं जं
तं भण्णए अ मअणमंडणमेत्थ पेम्मं ।
दुल्लक्खअं पि जं पअडेइ जणो जअम्मि
तं जाणिमो अ सुबहुत्तं मअणिंदजालं ॥ † ॥ १२ ॥

* कथमिव स लक्ष्यते ? ।

† ययोः स्वभावप्रसरत्सुलोलदृष्टिपर्यन्तलुठितमनसोः परस्परेण ।
वर्द्धमानमन्मथवितीर्णरसप्रसारयोः प्रकाशते लघुरिव चित्तभावः ॥

अपि च—

अन्तर्निविष्टमदनविभ्रमडम्बरं यत्
तत् भण्यते च मदनमण्डनमत्र प्रेम ।
दुर्लक्ष्यमपि यत् प्रकटयति जनो जगति
तज्जानीमश्च सुबहुलं मदनेन्द्रजालम् ॥

ययोः परस्परेण अन्योऽन्येन स्वभावतः प्रसरन्त्यः प्रचलन्त्यः सुलोलाः सुचञ्चला या दृष्टयः तासां पर्यन्तेषु अपाङ्गावलोकनेष्विति भावः, लुठितं पतितं, पर्यस्तमित्यर्थः, मनो ययोः तथाभूतयोः, अन्योऽन्यापाङ्गावलोकनमग्नहृदययोरिति भावः, वर्द्धमानेन वृद्धिं गच्छता मन्मथेन कामेन वितीर्णः दत्तः, जनित इति यावत्, रसप्रसरः शृङ्गारातिरेकः, दृश्यते इति शेषः, तयोर्दम्पत्योः चित्तभावः मनसोऽभिप्रायः लघुरिव द्रुत इव प्रकाशते प्रकटतां गच्छति ॥ ११ ॥

यत् अन्तर्निविष्टस्य हृदयं गतस्य मदनस्य विभ्रमडम्बरं विलासातिशय्यं, प्रियजनवशीकरणहेतुभूतम् इति भावः, तत् अत्र संसारे मदनमण्डनं कामभूषणं प्रेम भण्यते कथ्यते। जगति जनः दुर्लक्ष्यमपि लक्षयितुमशक्यमपि यत् प्रकटयति प्रकाशयति तत् सुबहुलं सुमहत् मदनस्य इन्द्रजालं विस्मयकरीं लोकप्रतारिणीं कपटविद्यां जानीमः मन्यामहे ॥१२॥

विदूषकः। जइ चित्तगदं पेम्ममणुराअमुप्पादेदि, ता किं कज्जदि मंडणाडंबरविडंबणाए ?। * (ड)

राजा। वअस्स! सच्चमिणं—

कि मेहलावलअणेउरसेहरेहिं ?

किं चंगिमाअ ? किमु मंडणडंबरेहिं ?।

तं अण्णमत्थि इह किंपि णिअंबिणीओ

जेणं लहंति सुहअत्तणमंजरीओ ॥ † ॥ १२ ॥

अवि अ—

किं गेअणिट्टविहिणा ? किमु वारुणीए ?

धूवेण किं अगुरुणा ? किमु कुंकुमेण ?।

* यदि चित्तगतं प्रेम अनुरागमुत्पादयति, तत् किं क्रियते मण्डनाडम्बरविडम्बनया ?।

† वयस्य! सत्यमिदम्—

किं मेखलावलयनूपुरशेखरैः ?

किं चङ्गिमत्वेन ? किमु मण्डनाडम्बरैः ?।

तदन्यदस्तीह किमपि नितम्बिन्यो

येन लभन्ते सुभगत्वमञ्जरीः ॥

अपि च—

किं गेयनृत्यविधिना ? किमु वारुण्या ?

धूपेन किम् अगुरुणा ? किमु कुङ्कुमेन ?।

(ड) यदि चित्तगतं हृदयान्तस्थं प्रेम अनुरागम् आसक्तिम् उत्पादयति जनयति, तत् तदा मण्डनानाम् अलङ्काराणाम् आडम्बरे विस्तारे आयोजने वा विडम्बना प्रयासः तया किं क्रियते ? किं फलं साध्यते ? न किमपीत्यर्थः।

मेखलावलयनूपुरशेखरैः काञ्चीकङ्कणमञ्जीरशिरोभूषणैः किम् ? न किमपि फलमित्यर्थः, चङ्गिमत्वेन सौन्दर्य्यबलेन किम ? न किमपीत्यर्थः, मण्डनाडम्बरैः अन्यैः अलङ्करणप्रयासैः किम ? नैव किमपि कार्य्यमित्यर्थः, येन नितम्बिन्यः कामिन्यः सुभगत्वमञ्जरीः सौभाग्यकला: लभन्ते प्राप्नुवन्ति, इह संसारे तत् अन्यत् किमपि अस्ति, तत्तु ताराभेदं अनुराग एवेति भावः॥ १२ ॥

मिट्ठत्तणे महिदलम्मि ण किं वि अण्णं
रूवोअ अत्थि सरिसं उण माणुसस्स ? ॥ १४ ॥

अवि अ—

जा चक्कवट्टिघरिणी जणगेहिणी वा
पेम्मम्मि ताण ण तिलं वि विसेसलाभो ।
जाणे पिओ जइ किज्जदि को वि भावो
माणिक्कभूसणणिअसणकुंकुमेहिं ॥ १५ ॥

अवि अ—

किं लोअणेहिं तरलेहिं ? किमाणणेण
चंदोवमेण ? थणएहिं किमुण्णएहिं ? ।

मधुरत्वे महीतले न किमप्यन्यत्
रूपेऽस्ति सदृशं पुनर्मानुषस्य ॥

अपि च—

या चक्रवर्तिगृहिणी जनगेहिनी वा
प्रेमणि तयोर्न तिलमात्रमपि विशेषलाभः ।
जाने प्रिया यदि क्रियते कोऽपि भावो
माणिक्यभूषणनिवसनकुङ्कुमैः ॥

अपि च—

किं लोचनैस्तरलैः ? किमाननेन
चन्द्रोपमेन ? स्तनैः किमुन्नतैः ? ।

गेयं गानं नृत्यं नर्तनं तयोर्विधिः अनुष्ठानं तेन किम् ? वारुण्या सुरया किम् ? अगुरुणा धूपेन किम् ? कुङ्कुमेन किम् ? न एतैः किमपि फलमित्यर्थः । महीतले पृथिव्यां मानुषस्य पुनः किन्तु रूपे प्रमाणः सदृशं किमपि, नास्तीति शेषः, मधुरत्वे न अस्ति ॥१४॥

या चक्रवर्तिनः सम्राजः गृहिणी महिषी, या जनगेहिनी सामान्यजनकान्ता वा, तयोः प्रेमणि तिलमात्रमपि अणुरपीत्यर्थः, विशेषलाभः प्रभेदज्ञानं न, अस्तीति शेषः । यदि प्रिया सौन्दर्यशोभया कोऽपि भावः प्रणयः क्रियते, तदा माणिक्य-भूषणेन निवसनेन सुवसनेन कुङ्कुमेन च, न भवतीति शेषः, इति जाने मन्ये ॥ १५ ॥

तं किं पि अस्सि इह भूवलए णिमित्तं
जेणांगणाअ हिअआउ ण ओसरंति ॥ † ॥ १६ ॥

विदूषकः। एव्वं णेदं, किं उण अस्सं पि मे कधेसु, जं कुमारत्तणे माणुसस्स अमणोज्जमेतस्सिं वि तरुणत्तणे चंगत्तणं वड्ढदि। * (ढ)

राजा। णूणं दुवे इह पजावइणो जअम्मि
जे देहणिम्मवणजोव्वणदाणदक्खा।
एक्को घडेदि पढमं कुमरीणमंगं
उक्कारिऊण पअडेइ उणो दुईओ ॥ १७ ॥

---

तत्किमप्यस्तीह भूवलये निमित्तं
येनाङ्गना हृदयान्नापसरन्ति ॥

* एवमेतत्, किं पुनरन्यदपि मे कथय, यत् कुमारत्वे मानुषस्यामनोज्ञम्, एतस्मिन्नपि तारुण्ये चङ्गत्वं वर्द्धते।

† नूनं द्वाविह प्रजापती जगति
यौ देहनिर्माणयौवनदानदक्षौ।
एको घटयति प्रथमं कुमारीणामङ्गम्
उत्कीर्य्य प्रकटयति पुनर्द्वितीयः ॥

---

तरलेक्षणाभिः चञ्चलैः लोचनैः किम्? चन्द्रोपमेन शशिनिभेन आननेन मुखेन किम्? उन्नतैः उत्तुङ्गैः स्तनैः किम्? न किमपि एतैः प्रयोजनमस्तीत्यर्थः। इह भूवलये भूमण्डले तत् किमपि अन्यत् निमित्तं कारणम्, अस्तीति शेषः, येन निमित्तेन अङ्गनाः कामिन्यः हृदयात् न अपसरन्ति न चलन्ति, सततं हृदय एव तिष्ठन्तीति भावः ॥१६॥

(ढ) मानुषस्य कुमारत्वे अप्राप्तयौवनत्वे इत्यर्थः, यत् अमनोज्ञं न मनोहरमित्यर्थः, तारुण्ये यौवने चङ्गत्वं सौन्दर्य्यं, मनोहरत्वमिति यावत्, वर्द्धते वृद्धिं गच्छति।

इह जगति द्वौ प्रजापती विधातारौ, यौ देहनिर्माणे यौवनदाने च दक्षौ निपुणौ, तयोरेकः प्रथमं कुमारीणाम् अङ्गं घटयति निर्म्मिमीते, द्वितीयः पुनः उत्कीर्य्य उन्मार्ज्येति यावत् प्रकटयति प्रकाशयति। एतेन निर्माणविधेः उन्मीलनकारिणः कामस्य सविशेषं नैपुण्यं सूच्यते ॥१७॥

तेण अ—

रणिदवलअकंचीणेउरारावसलच्छी
मरगदमणिमाला गोरिआ हारजट्ठी ।
हिअअहरणमंत्तं जोव्वणं कामिणीणं
जअदि मअणकंडं छट्ठअं वड्ढअं अ ॥ १८ ॥

तहा अ—

अंगं लावण्णपुण्णं सवणपरिसरे लोअणा हारतारा
वच्छं थोरत्थणिल्लं तिवलिवलइदं मुट्ठिगेज्झं अ मज्झं ।
चक्काआरो णिदंबो तरुणिमसमए किं णु अण्णेण कज्जं ?
पंचेहिं ज्जेव्व बाला मअणजअमहावेजअंतीअ होंति ॥ १९ ॥

तेन च—

रणितवलयकाञ्चीनूपुरावासलक्ष्मी-
र्मरकतमणिमाला गौरिका हारयष्टिः ।
हृदयहरणमन्त्रं यौवनं कामिनीनां
जयति मदनकाण्डः षष्ठको वर्द्धकश्च ॥

तथा च—

अङ्गं लावण्यपूर्णं श्रवणपरिसरे लोचने हारतारे
वक्षः स्थूलस्तनं त्रिवलिवलयितं मुष्टिग्राह्यञ्च मध्यम् ।
चक्राकारो नितम्बस्तरुणिमसमये किं न्वन्येन कार्य्यम् ?
पञ्चभिरेव बाला मदनजयमहावैजयन्त्यो भवन्ति ॥

रणितानां वलयानां काञ्चीनां रशनानां नूपुराणाम् आवासेन धारणेनेति भावः, लक्ष्मीः श्रीः, मरकतमणीनां माला स्रक्, गौरिका काञ्चनी हारयष्टिः, तिष्ठत्विति शेषः, षष्ठकः षष्ठः पूरकः, वर्द्धकश्च प्रवृद्धतरश्च, मदनस्य काण्डः शरः, कामिनीनां हृदयहरणमन्त्रं यौवनं जयति सर्वोत्कर्षेण वर्त्तते । मदनस्य पञ्चसु शरेषु सत्स्वपि तेभ्यः प्रबलतरेण कामिनीनां यौवनरूपषष्ठशरेण जगत् पराजीयते इति भावः ॥१८॥

तरुणिमसमये यौवने लावण्येन पूर्णम् अङ्गं शरीरं, हारा मनोहारिणो तारे ययोः तथाभूते श्रवणपरिसरे आकर्णप्राप्ते इति यावत्, लोचने नेत्रे, स्थूलौ स्तनौ यत्र तथाविधं वक्षः, त्रिवलिभिः तिसृभिः रेखाभिः वलयितं वेष्टितं मुष्टिग्राह्यं मुष्टिमेयं च

[ नेपथ्ये ]

सहि कुरंगिए ! इमिणा सिसिरोवआरेण णलिणिव्व कामं किलिस्सामि ( ण )—

विसं व्व विसकंदलो विसहरु व्व हारच्छडा
वअस्समिव अप्पणो किरइ तालविंताणिलो ।
तहा अ करणिग्गदं ज्जलइ जंतधाराजलं
ण चंदणमहोसहं हरइ देहदाहं अ मे ॥ * ॥ २० ॥

विदूषकः। सुदं प्पिअवअस्सेण ? भणिआ कस्स पीऊसगंडूसेहिं ; ता किं अज्जवि उपेक्खीअदि घणघम्मेण किलिम्मंती मुणालिआ ? गाढकड्ढणदुस्सहेण सलिलेण सिंचिज्जंती केलिकुसुमत्थली ? कम्मासिअमोत्तिआणं झडित्ति फुडंतो एक्का-

सखि कुरङ्गिके ! अनेन शिशिरोपचारेण नलिनीव कामं क्लाम्यामि—

विषमिव बिसकन्दलो विषधर इव हारच्छटा
वयस्यमिवात्मनः किरति तालवृन्तानिलः ।
तथा च करनिर्गतं ज्वलति यन्त्रधाराजलं
न चन्दनमहौषधं हरति देहदाहं च मे ॥

† श्रुतं प्रियवयस्येन ? भणिता कस्य पीयूषगण्डूषैः ; तत् किमद्यापि उपेक्ष्यते घनघर्मेण क्लाम्यन्ती मृणालिका ? गाढक्वथनदुःसहेन सलिलेन सिच्यमाना केलिकुसुमस्थली ? कार्म्मासितमौक्तिकानां झटिति स्फुटन्ती

मध्यं कटिदेशः, तथा चक्राकारः मण्डलाकारः, सुवर्त्तुल इत्यर्थः, नितम्बः, एभिरेव पञ्चभिः बालाः कामिन्यः मदनस्य कामस्य सर्वे जगतां विजये महावैजयन्त्यः महत्यः पताकाः भवन्ति, अन्येन किं नु कार्य्यम ? नेव किमपीत्यर्थः ॥१९॥

(ण) शिशिरोपचारेण शीतलप्रक्रियया, नलिनीदलसंस्तरादिनेति भावः, नीहारपातेन च ।

बिसकन्दलो मृणालकता विषमिव गरलमिव, हारच्छटा हारावली विषधर इव भुजग इव, मे प्रतिभातीति शेषः। तालवृन्तानिलः आत्मनः स्वस्य वयस्यमिव अग्निमित्यर्थः, किरति वर्षति, तथा करनिर्गतं युष्माकं करेभ्यः निःसृतं यन्त्रधारा-

वलिआ ? गंठिवण्णकेदारिआ लुंठिज्जन्ती गंधहरिणेण ? ता सव्वं दे सिविणअं संपण्णं। एहि, प्पविसम्ह। उट्ठिज्जदु मअरद्धअ-पदाआ। पअट्टदु कंठकुहरम्मि पंचमहुंकाराणं रिंछोली। थक्कंतु बाप्फप्पवाहा। मंथरिज्जंतु णीसासप्पसरा। लहदु लावण्णं उणो णवभावं। ता एहि, खिड्डक्किआदुआरेण प्पविसम्ह। † (त)

[ इति प्रविशतः ]।

[ ततः प्रविशति नायिका कुरङ्गिका च ]।

नायिका। [ सबाष्पमात्मगतम् ]। अम्मो ! किं एसो सहसा गअणंगणादो अवदीण्णो पुण्णिमाहरिणंको ? किं वा तुट्टेण

एकावली ? ग्रन्थिपर्ण-केदारिका लुण्ठ्यमाना गन्धहरिणेन ? तत् सर्वं ते स्वप्नं सम्पन्नम्। एहि, प्रविशावः। उत्थाप्यतां मकरध्वजपताका। प्रवर्त्ततां कण्ठकुहरे पञ्चमहुङ्काराणां रचना। स्तोकीक्रियन्तां बाष्पप्रवाहाः। मन्थरीक्रियन्तां निःश्वास-प्रसराः। लभतां लावण्यं पुनर्नवभावम्। तदेहि, खिड्‌क्किकाद्वारेण प्रविशावः।

‡ अहो ! किमेष सहसा गगनाङ्गणादवतीर्णः पूर्णिमाहरिणाङ्कः ? किं वा

जलं ज्वलति तपतीत्यर्थः, चन्दनमेव महौषधस्य मे मम [illegible] न हरति न शमयतीत्यर्थः ॥२०॥

(त) भृतो पूरितो पीयूषगण्डूषैः अमृतकवलैरिति यावत्। घनघर्मेण गाढ़-सन्तापेनेत्यर्थः। गाढम् अतिमात्रं क्वथितम् उत्तापितमित्यर्थः, अत एव दुःसहं श्रीदुमक्कं तेन। कोङ्कुडुमल्ली कोकाकुडुमवृन्दिः। वाण्णालिकेति।—वर्णैः माणैर्निष्पन्नानि वाण्णालिकानि मौक्तिकानि मुक्ताफलानि तेषां, वाण्णालिकैत्वेन सम्यग्विपुष्टता मौक्तिकानां लक्ष्यते। स्फुटन्ती विदलन्ती। ग्रन्थिपर्णानां गन्धद्रव्य-भेदानां केदारिका क्षेत्रम्। लुण्ठ्यमाना क्रियमाणा, विपर्य्यस्यमानेति यावत्। गन्धहरिणेन कस्तूरीमृगेण। कण्ठकुहरे कण्ठविवरे। पञ्चमहुङ्काराणां कोकिल-कूजितानां रचना प्रसरः। "पुष्पसाधारणे काले पिकः कूजति पञ्चमम्" इत्युक्तेः। उत्थापिताया ध्वजाः कोकिलकण्ठाः मधुरस्वरः प्रवर्त्तिरिति भावः। स्तोकीक्रियन्तां स्वल्पीक्रियन्तामित्यर्थः। बाष्पप्रवाहाः अश्रुधाराः, ध्वजा इति शेषः। मन्थरी-क्रियन्तां मन्दीक्रियन्ताम्। पुनर्नवभावं नूतनत्वम्। खिड्‌क्किकाद्वारेण पार्श्वद्वारेण।

णीलकंठेण णिअदेहं लंभिदो मणोहवो? किं वा हिअअस्स दुल्लहो णअणाणं सज्जणो जणो मं संभावेदि? [प्रकाशम्]। सहि कुरंगिए! इंदजालं विअ पेक्खामि। § (ध)

विदूषकः। [राजानं हस्ते गृहीत्वा]। भोदि! सच्चं इंदजालं संपण्णं। *

[नायिका लज्जते]।

कुरङ्गिका। सहि! कप्पूरमंजरि! अब्भुट्ठाणेण संभावेहि भट्टारअं। † (द)

[नायिका उत्थातुमिच्छति]।

राजा। [हस्तेन गृहीत्वा]।—

उट्ठिऊण थणभारभंगुरं मा मिअंकमुहि! भंज मज्झअं।
तुज्झ ईरिसणिवेसदंसणे लोअणाणं मअणो पसीददु ॥ २१ ॥

---

तुष्टेन नीलकण्ठेन निजदेहं लम्भितो मनोभवः? किं वा हृदयस्य दुर्लभो नयनानां सज्जनो जनो मां सम्भावयति? सखि कुरङ्गिके! इन्द्रजालमिव पश्यामि।

* भवति! सत्यमिन्द्रजालं सम्पन्नम्।

† सखि कर्पूरमञ्जरि! अभ्युत्थानेन सम्भावय भट्टारकम्।

‡ उत्थाय स्तनभारभङ्गुरं मा मृगाङ्कमुखि! भञ्जय मध्यम्।
तवेदृशनिवेशदर्शनाल्लोचनयोर्मदनः प्रसीदतु ॥

---

(ध) गगनाङ्गणात् अवतीर्णत्वात्, पूर्णिमाहरिणाङ्कः पूर्णचन्द्र इत्यर्थः। नीलकण्ठेन हरेण, लम्भितः प्रापितः। मनोभवः कामः। दुर्लभः चौर इव। सज्जनः प्रीणन इति भावः। सम्भावयति सम्भोजयति। इन्द्रजालमिव अद्भुतैकनिदानं विस्मयकमिवेति भावः।

(द) भट्टारकं स्वामिनम्।

हे मृगाङ्कमुखि! चन्द्रमुखि! उत्थाय उत्थानेनेति भावः, स्तनयोर्भारेण भङ्गुरं भङ्गप्रवणं मध्यं कटिदेशं मा भञ्जय भग्नं मा कुर्वित्यर्थः, तव ईदृशनिवेशदर्शनात् ईदृगावेशदर्शनात् लोचनयोः, नयनयोरिति शेषः, मदनः कामः, अभिलाष इति यावत्,

अवि अ—

जिस्सा पुरो ण हरिदा दलिआ हलिद्दा
रोमाणिअं ण कणअं ण अ चंपआइं ।
ताइं सुवण्णकुसुमेहिं विलोअणाइं
अच्चेमि जेहिं हरिणक्खि ! तुमंसि दिट्ठा ॥ * ॥ २२ ॥

विदूषकः। गब्भघरवासेण सेअसलिलसित्तगत्ता संभूदा तत्थभोदी कप्पूरमंजरी ; ता इमं सिचअंचलेण वीजइस्सं दाव । [ तथा कुर्वन् ]। हा ! हा ! कधं वत्थंचलपवणेण णिव्वाणो प्पदीवो । [ विचिन्त्य स्वगतम् ]। भोदु, लोलोव्वाणं ज्जेव्व गच्छम्ह । [प्रकाशम्]।

अपि च—

यस्याः पुरो न हरिता दलिता हरिद्रा
उज्ज्वलीकृतं न कनकं न च चम्पकानि ।
ते सुवर्णकुसुमैर्विलोचने
अर्चयामि याभ्यां हरिणाक्षि ! त्वमसि दृष्टा ॥

§ गर्भगृहवासेन स्वेदसलिलसिक्तगात्रा सम्भूता तत्रभवती कर्पूरमञ्जरी ; तदिमां सिचयाञ्चलेन वीजयिष्यामि तावत् । हा ! हा ! कथं वस्त्राञ्चलपवनेन निर्वाणः

प्रसीदतु प्रसन्नो भवतु, सफलो भवत्विति यावत् ; यद्वा—तव लोचनयोः नयनयोः ईदृशनिर्वेददर्शनात् सदृशावलोकनदर्शनादिति भावः, मदनः कामः प्रसीदतु प्रसन्नो भवतु, कृतार्थता व्रजतां, ममेति शेषः ॥ २१ ॥

यस्या इति।—हे हरिणाक्षि ! मृगनयने ! यस्यास्तव पुरः अग्रतः दलिता विदलिता हरिद्रा न हरिता न हरिद्रा, हरिद्रात्वेन न गणनीयेति भावः, कनकं काञ्चनं न उज्ज्वलीकृतं न उज्ज्वलतया गणितमिति यावत्, चम्पकानि च न, उज्ज्वलीकृतानीति शेषः, सा त्वं याभ्यां दृष्टा अवलोकिता असि, ते विलोचने, मदीये इति शेषः, सुवर्णकुसुमैः अर्चयामि पूजयामि, प्रशंसामीति भावः, तस्य चक्षुःसाफल्यमिति भावः ॥२२॥

भो ! अंधआरणच्चिदं वट्टदि, ता णिक्कामम्ह सुरंगामुहेण ज्जेव्व पमदुज्जाणं दाव । § (ध)

[ सर्वे निष्क्रमणं नाटयन्ति ] ।

राजा । [ कर्पूरमञ्जरीं करे धृत्वा ] ।—

मज्झ हत्थट्ठिदपाणिपल्लवा ईस संचरणबंधुरा भव ।
जं चिराअ कलहंसमंडली भोदु केलिगमणम्मि दुब्भगा ॥२३॥

[ स्पर्शसुखमभिनीय ] ।

जे णवस्स तिउसस्स कंटआ जे कदंबमउलस्स केसरा ।
अज्ज तुज्झ करफंसभंगिहिं ते हुअंति मह अंगहिं णिज्जिदा ॥*॥२४॥

प्रदीपः । भवतु, लीलोद्यानमेव गच्छामः । भोः ! अन्धकारनृत्यं वर्तते, तन्निष्क्रामामः सुरङ्गामुखेनैव प्रमदोद्यानं तावत् ।

* मम हस्तस्थितपाणिपल्लवा ईषत्सञ्चरणबन्धुरा भव ।
यच्चिराय कलहंसमण्डली भवतु केलिगमने दुर्भगा ॥
ये नवस्य त्रपुषस्य कण्टका ये कदम्बमुकुलस्य केसराः
अद्य तव करस्पर्शभङ्गिभिस्ते भवन्ति ममाङ्गैर्निर्जिताः ॥

(ध) गमनश्रमवशेन अनर्गलोच्छलन्त्या, स्वेदमलिनेन घर्मवारिणा, सिचयम् आर्द्रीकृतं गात्रं यस्याः तथाभूता । सिचयाञ्चलेन वस्त्राञ्चलेन, "पटोऽस्त्री कर्पटः शाटः सिचय-स्रोतलक्तकाः" इति रभसः । अन्धकारनृत्यम् अन्धकाराणां नृत्यम्, अन्धकारातिशय इति यावत् । सुरङ्गामुखेन सुरङ्गाविवरेण ।

मम हस्ते स्थितः पाणिपल्लवः कराङ्गुलयः यस्याः तथोक्ता, करधृतमत्करेति भावः, ईषत् मन्दं मन्दं सञ्चरणाय बन्धुरा उन्नता, उद्यापितगात्रेत्यर्थः, भव, यत् येन, तव मन्दमन्दसञ्चरणेनेति भावः, कलहंसमण्डली चिराय केलिगमने लीलागतौ दुर्भगा अप्रिया भवतु, तव मन्दमन्दगतिं दृष्ट्वा कलहंसानां गतिं न कोऽपि आद्रियतामिति भावः ॥२३॥

ये नवस्य त्रपुषस्य "शशा" इत्याख्यफलविशेषस्य कण्टकाः सूक्ष्मशलाका इति यावत्, ये च कदम्बमुकुलस्य केसराः किञ्जल्काः, "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः; ते अद्य तव करस्पर्शस्य वल्गिभिः मम अङ्गैः अवयवैः, लोमभिरिति भावः, निर्जिताः भवन्ति, तव करस्पर्शेन मम अतीव रोमहर्षो जात इति भावः ॥२४॥

विदूषकः । भो! कणअचंडेण वण्णिदा चंदुज्जोअलच्छी; ता संपदं माणिक्कचंडस्स अवसरो । * (प)

[ नेपथ्ये ] ।

द्वितीयो वैतालिकः ।—

दज्झंतागुरुधूपवट्टिकलिआ दीप्पंतदीवोज्जला
लंबिज्जंतविचित्तमोत्तिअलदा मुंचतपारावदा ।
सज्जिज्जंतमणोज्जकेलिसअणा जप्पंतदूईजणा
सज्जुक्कुज्ज्वलंतमाणिणिजणा वट्टंति कीलाघरा ॥ † ॥ २७ ॥

अशोषणमोहनं मकरलाञ्छनस्यायुधं
मृगाङ्ककिरणावली नभस्तले पुञ्जीभवति ॥

भोः! कनकचण्डेन वर्णिता चन्द्रोद्योतलक्ष्मीः; तत् साम्प्रतं माणिक्यचण्डस्यावसरः ।

दह्यमानागुरुधूपवर्त्तिकलिता दीप्यमानदीपोज्ज्वला
लम्ब्यमानविचित्रमौक्तिकलता मुच्यमानपारावताः ।
सज्जीक्रियमाणमनोज्ञकेलिशयना जल्पद्दूतीजनाः
सद्यउत्कज्ज्वलन्मानिनीजना वर्तन्ते क्रीडागृहाः ॥

नास्ति कुङ्कुमगन्धद्रव्यविगमः यस्मिन् तथोक्तं, नास्ति चन्दनं यस्मिन् तत्, दशानां दिशाभूता दिगङ्गनानां मण्डनम् अलङ्करणं, नास्ति कञ्चुकः उत्तमवस्त्रविशेषः यस्मिन् तथोक्तम्, अकृत्रिमं कृत्रिमरहितं भुवनमण्डल्याः जगतीवध्वा इति भावः, भूषणम् अलङ्कारः, अशोषणं न शोषणं, न शोषणसाधनं, न मोहनं न मोहजनकमित्यर्थः, मकरध्वजस्य कामस्य आयुधम् अस्त्रं मृगाङ्ककिरणावली चन्द्रमयूखनिचयः नभस्तले पुञ्जीभवति राशीभवति । रूपकालङ्कारः ॥ २६ ॥

(प) कनकचण्डेन तन्नाम्ना वैतालिकेन । चन्द्रोद्योतलक्ष्मीः चन्द्रालोकश्रीः । माणिक्यचण्डस्य तदाख्यस्य वैतालिकस्य ।

क्रीडागृहाः क्रीडामन्दिराणि दह्यमानाः अगुरुधूपानां वर्त्तय एव कलिका यैः तथोक्ताः, सौगन्ध्यसम्भारार्थमिति भावः; दीप्यमानेन प्रज्ज्वल्यमानेन दीपेन उज्ज्वलाः प्रकाशिताः, लम्ब्यमानाः आन्दोल्यमानाः विचित्राः रम्याः मौक्तिकलताः मुक्ताहाराः येषु तथाविधाः, शोभार्थमिति भावः; मुच्यमानाः, बध्यमानाच्छादिति

अवि अ—

देंता कप्पूरपूरच्छुरणमिव दिसासुंदरीणं मुहेसु
सच्छं जोण्हं किरंतो भुअणजणमणाणंदणं चंदणं व्व ।
जिस्सं कंदप्पकंदं तिहुअणकलणाकंदलिल्लं कुणंतो
जादा एणंकपादा सअलजलहरामुक्कधाराणुआरा ॥*॥ २८ ॥

विदूषकः ।—

दिसवहुत्तंसो णहसरहंसो ।
तिहुवणकंदो प्पसरइ चंदो ॥†॥ २९ ॥

* अपि च—

ददतः कर्पूरपूरक्षुरणमिव दिशासुन्दरीणां मुखेषु
श्लक्ष्णां ज्योत्स्नां किरन्तो भुवनजनमनोनन्दनं चन्दनमिव ।
जीर्णं कन्दर्पकन्दं त्रिभुवनकलनाकन्दलितं कुर्वन्तो
जाता एणाङ्कपादाः सकलजलधरोन्मुक्तधारानुकाराः ॥

† दिग्वधूत्तंसो नभःसरोहंसः ।
त्रिभुवनकन्दः प्रसरति चन्द्रः ॥

येषु:, पारावताः कपोता येषु तथाभूताः, तेषां सुरतकेल्युद्दीपकत्वादिति भावः; सज्जीक्रियमाणानि पुष्परचनादिभिरिति भावः. मनोज्ञानि मर्महराणि केलि-शयनानि क्रीडाशय्याः येषु तथाविधाः, जल्पन्ति आलपन्ति दूतीनां शतानि समूहाः येषु तथोक्ताः, तथा शय्याया उत्सङ्गे पार्श्वके, न तु शय्यातले इति भावः, गलन् तिष्ठन् मानिनीजनः मानवती नारी येषु तथाविधाः वर्तन्ते ॥ २७ ॥

सकलैः जलभरैः जलधरैः मेघैः उन्मुक्ता परिक्षिप्ता या धारा तामनुकुर्वन्तीति तथाविधाः, एणाङ्कपादाः चन्द्रकिरणाः दिश एव सुन्दर्य्यः तासां मुखेषु कर्पूरपूरैः कर्पूरचूर्णनिकरैः क्षुरणमिव लेपनमिव ददतः अर्पयन्तः, भुवनजनानां मनसः नन्दनम् आनन्दजननं चन्दनमिव श्लक्ष्णां चिक्कणां ज्योत्स्नां किरन्तः वर्षन्तः, जीर्णं तिरस्कृतं, मालिन्यरहितमिति भावः, कन्दर्पकन्दं कामपुञ्जं त्रिभुवनस्य कलनया व्यापनेन कन्दलितं पल्लवितं, प्ररूढमिति यावत्, कुर्वन्तः कामसमुद्दीपकाः इति भावः, जाताः ॥ २८ ॥

दिगेव वधूः तस्याः उत्तंसः कर्णभूषणं, नभ आकाशमेव सरः तस्य हंसः, त्रिभुवनस्य

कुरङ्गिका।—

ससहररइदगव्वो माणिणिमाणघट्टो।
णवचंपअकोदंडो मअणो जअइ प्पअंडो ॥३०॥

[कर्पूरमञ्जरीं प्रति]। प्पिअसहि! तुए किदं चंदवण्णणं महाराअस्स पुरदो पढ़िस्सं। *

[कर्पूरमञ्जरी लज्जते। कुरङ्गिका पठति]।

मंडले ससहरस्स गोरए दंतपंजरविलासचोरए।
भाइ लंछणमिओ फुरंतओ केलिकोइलतुलं धरंतओ ॥†॥ ३१॥

राजा। अहो! कप्पूरमंजरीए अहिणवत्थदंसणं, रमणीओ सद्दो, उत्तिविचित्तदा, रसणिस्संदो अ। ‡ (फ)

शशधररचितगर्वो मानिनीमानघट्टः।
नवचम्पककोदण्डो मदनो जयति प्रचण्डः ॥

* प्रियसखि! त्वया कृतं चन्द्रवर्णनं महाराजस्य पुरतः पठिष्यामि।

† मण्डले शशधरस्य गौरे दन्तपञ्जरविलासचौरे।
भाति लाञ्छनमृगः स्फुरन् केलिकोकिलतुलां धारयन् ॥

‡ अहो! कर्पूरमञ्जर्या अभिनवार्थदर्शनं, रमणीयः शब्दः, उक्तिविचित्रता, रसनिष्यन्दश्च।

सुरतस्य, मनविच्छेदस्येति ध्वनिः, कुन्दः पुष्पविशेषः, उद्दीपक इति भावः, चन्द्रः प्रसरति उदयते ॥२९॥

शशधरेण चन्द्रेण रचितः जनितः गर्वो यस्य तथोक्तः, मानिनीनां मानवतीनां मानस्य घट्टः पेषणयन्त्रविशेषः, "जाँता" इति प्रसिद्धः, नवं चम्पकं कोदण्डः धनुर्यस्य तथाभूतः, अत एव प्रचण्डः समुद्धतः, मदनः जयति सर्वोत्कर्षेण विराजते इत्यर्थः ॥३०॥

गौरे गौरवर्णे, धवले इत्यर्थः, अत एव दन्तपञ्जरस्य हस्तिदन्तनिर्मितस्य पञ्जरस्य पक्षिनिरोधभाजनविशेषस्य विलासं शोभां चोरयतीति तथोक्ते, दन्तपञ्जरानुकारिणी-त्यर्थः, शशधरस्य चन्द्रस्य मण्डले लाञ्छनमृगः कलङ्करूपो मृगः, केलिकोकिलस्य क्रीडापिकस्य, तुलां साम्यं धारयन् भाति दीप्यते ॥३१॥

[ चन्द्रमुद्दिश्य ]

मुक्कसंक ! हरिणंक । किं तुमं
सुंदरीपरिसरेण हिंडसि ? ।
गोरगंडपरिपंडुरत्तणं
पेक्ख दिस्समसुणा मुहे ण दे ? ॥ * ॥ २४ ॥

[ नेपथ्ये महान् कलकलः । सर्वे आकर्णयन्ति ] ।

राजा । किं उण एस कोलाहलो ? । †

कर्पूरमञ्जरी । [ ससाध्वसम् ] । प्पिअसहि ! एदमवगमिअ आअच्छ । ‡ (ब)

[ कुरङ्गिका निष्क्रम्य प्रविशति ] ।

विदूषकः । देवीए प्पिअवअस्सस्स वंचणा किदेत्ति तक्केमि । §

कुरङ्गिका । प्पिअसहि ! भट्टारअस्स वंचणं कादुअ

मुक्तशङ्क ! हरिणाङ्क ! किं त्वं सुन्दरीपरिसरेण हिण्डसे ? ।
गौरगण्डपरिपाण्डुरत्वं पश्य दृष्टममुना मुखे न ते ? ॥

† किं पुनरेष कोलाहलः ? ।

‡ प्रियसखि ! एतदवगम्य आगच्छ ।

§ देव्या प्रियवयस्यस्य वञ्चना कृतेति तर्कयामि ।

हे मुक्तशङ्क ! निःशङ्क ! हरिणाङ्क ! चन्द्र ! परकीयसुन्दरीणां परिसरेण भ्रमणात् तव शङ्कितत्वमुचितमेवेति भावः ; त्वं सुन्दरीणां परिसरेण समवायेन, सङ्गेनेत्यर्थः, किं कथं हिण्डसे भ्रमसि ? अमुना सुन्दरीपरिसरेण ते तव मुखे गौरयोः धवलयोः गण्डयोः कपोलयोः परिपाण्डुरत्वं न दृष्टम् ? अपि तु दृष्टमेव पश्य । लोके च दुष्कृतकारिणो गण्डे चूर्णं मसीञ्च दत्त्वा निष्कासनं प्रसिद्धम् ; तव तु परनारीविला-सरसेन अत एव गण्डे कलङ्करूपमसीधारणं, सुन्दरीणाञ्च कपोलधावल्यरूपचूर्णदानञ्च घटितमिति भावः ॥२४॥

(ब) एतत् कोलाहलकारणमित्यर्थः । अवगम्य ज्ञात्वा ।

तुए सह संगमं जाणिअ आअच्छदि देवी ; तेण कुज्ज-वामण-किरात-वरिसवर-सोविदल्लाणं एस कोलाहलो । * (अ)

कर्पूरमञ्जरी । [सभयम्] । ता मं पेसदु महाराओ, जेणाहं इमिणा सुरंगामुहेण ज्जेव्व पविसिअ रक्खाघरअं गच्छेमि, जह देवी महाराएण सह संगमं ण जाणादि । †

[इति निष्क्रान्ताः सर्वे] ।

इति तृतीयजवनिकान्तरम् ।

## अथ चतुर्थजवनिकान्तरम् ।

[ततः प्रविशति राजा विदूषकश्च] ।

राजा । अहो ! गाढअरो गिम्हो, पवणो अ पअंडो, ता कधं णु सहिदव्वो ; जदो—

इह कुसुमसरेक्कगोअराणं
इदमुभअं वि सुदुस्सहं त्ति मन्ने ।
जरठरइकरालिदो अ कालो
तह अ जणेण पिएण विप्पलंभो ॥*॥ १ ॥

* प्रियसखि ! भट्टारकस्य वञ्चनां ज्ञात्वा त्वया सह सङ्गमं ज्ञात्वा आगच्छति देवी ; तेन कुब्ज-वामन-किरात-वर्षवर-सौविदल्लानामेष कोलाहलः ।

† तत् मां प्रेषयतु महाराजः, येनाहमनेन सुरङ्गामुखेनैव प्रविश्य रक्षागृहकं गच्छामि, यथा देवी महाराजेन सह सङ्गमं न जानाति ।

---

* अहो ! गाढतरो ग्रीष्मः, पवनश्च प्रचण्डः, तत् कथं नु सोढव्यः ; यतः,—
इह कुसुमशरैकगोचराणामिदमुभयमपि सुदुःसहमिति मन्ये ।
जरठरविकरालितश्च कालस्तथा च जनेन प्रियेण विप्रलम्भः ॥

(अ) कुब्जादीनामन्तःपुरचराणामिति भावः । सौविदल्लाः कञ्चुकिनः ।

---

इह संसारे कुसुमशरस्य कामस्य एकगोचरा एकमात्रविषयाः तेषां कामुकानामित्यर्थः, जरठेन प्रचण्डेन रविणा सूर्येण करालितः कवलितः कालः ग्रीष्मसमय

विदूषकः —

एक्के दाव मम्मह वाहणिज्जा अस्से दाव सोसणिज्जा ।
अम्हारिसो उण जणो ण कामस्स वाहणिज्जो ण तावस्स
सोसणिज्जो ॥ * ॥ २ ॥

[ नेपथ्ये ]।

ता किं ण क्खु दे मूलुप्पाड़िअचूड़िआविअलं सीसं करिस्से ? । † (क)

राजा । [ विहस्य ]। वअस्स ! लीलावणसच्छंदचारिणा केलिसुएण किं भणिदं ? । ‡

विदूषकः । [ सक्रोधम् ]। आ दासीए उत्त ! सूलाअरणजोग्गोसि । § (ख)

* एके तावत् मदनस्य वाहनीयाः अन्ये तावत् शोषणीयाः ।
अस्मादृशः पुनर्जनो न कामस्य वाहनीयो न तापस्य शोषणीयः ॥

† तत् किं न खलु ते मूलोत्पाटितचूड़ाविकलं शीर्षं करिष्ये ? ।

‡ वयस्य ! लीलावनस्वच्छन्दचारिणा केलिशुकेन किं भणितम् ? ।

§ आः दास्याः पुत्र ! शूलाकरणयोग्योऽसि ।

इत्यर्थः, तथा प्रियेण जनेन विप्रलम्भः विरहश्च, इदमुभयमपि दुःसहं दुःखेनापि सोढुमशक्यम्, इति मम अवस्थाभीत्यर्थः ॥१॥

एके कतिपये जनाः मदनस्य कामस्य वाहनीयाः पीड़नीयाः, अन्ये अपरे जनाः शोषणीयाः, निदाघतापेनेति शेषः ; अस्मादृशः जनः पुनः किन्तु कामस्य मदनस्य न वाहनीयः पीड़नीयः, न शोषणीयश्च ॥ २ ॥

(क) मूलात् उत्पाटितया उन्मूलितयेत्यर्थः, चूड़कया केशनिचयेन विकलं विरूपम् ।

(ख) शूलेति ।—शूलाकरणं शूले आरोपणं, तदयोग्यः तदर्हः, दुःशीलत्वात् शूलदानस्यैवयोग्यत्वमिति भावः ।

[ नेपथ्ये ]

सव्वं तुम्हाहिंतो संभाविज्जदि, जइ मे ण होंति पक्खावलीओ। * (ग)

राजा। [ विलोक्य ]। कहं उड्डीणो ज्जेव्व। †

[ विदूषकं प्रति ]।—

णिसातलिणवित्थरा तह दिणेसु वड्ढत्तणं
ससी लहदि खंडणं तह अ चंडबिंबो रई।
णिदाहदिअसेसु विप्फुरदि जस्स एव्वं कमो
कहं ण स विही तदो खुरसिहाइं खंडिज्जदि ?॥ ३॥

किं अ, णिउणं सेवणिज्जो जइ सुहसंगमो भोदि। (घ) जदो—

* सर्वं युष्माद्भ्यः सम्भाव्यते, यदि मे न भवन्ति पक्षावल्यः।

† कथमुड्डीन एव।

निशाऽसङ्कोचविस्तरा तथा दिनेषु वृद्धत्वं
शशी लभते खण्डनं तथा च चण्डबिम्बो रविः।
निदाघदिवसेषु विस्फुरति यस्यैवं क्रमः
कथं न स विधिस्ततः क्षुरशिखाभिः खण्ड्यते ?॥

किञ्च, निपुणं सेवनीयो यदि शुभसङ्गमो भवति। यतः—

(ग) पक्षावल्यः पक्षराजयः। पक्षो नाहम् उत्पतनं जानामि, अतो युष्माभिः मम मुखे निक्षेपः सम्भवतीति भावः।

निशा रात्रिः असङ्कोचः अलं गतः विस्तरः यस्याः तथोक्ता, खर्वेति भावः, तथा दिनेषु वृद्धत्वं वृद्धिः, अत एव शशी चन्द्रः खण्डनं क्षयम्, अल्पचन्द्रकालस्थितिरिति भावः, लभते, निशाया अल्पत्वादिति भावः, तथा रविश्च चण्डबिम्बः, दीर्घकाल-प्रतापित्वादिति भावः, निदाघदिवसेषु ग्रीष्मदिनेषु यस्य विधेः एवं क्रमः नियमः, विस्फुरति प्रसरति, स विधिः ततः कारणात्, अयुक्ताचरणादिति भावः, क्षुरशिखाभिः क्षुरधाराभिः कथं न खण्ड्यते ? न छिद्यते ? दुःसमाचारविधिरवश्यं छेत्तव्य इति भावः ॥३॥

(घ) निपुणं चारु यथा तथा सेवनीयः, एव काम इति शेषः, शुभसङ्गमः सुखेन प्रियेण सङ्गमः, प्रियसङ्गमे यं पाक्षेपो न गण्यते इति भावः।

मज्झण्हे सिरिखंडपंककलणा आ संझमाद्दंसुअं
कीलामज्जणमा-प्पदोससमअं साअं सुरा सीअला ।
गिम्हे पच्छिमजामिणीणिहुवणं जं किं पि पंचेसुणो
एदे पंच सिलीमुहा विजइणो सेसा सरा जज्जरा ॥ † ॥ ४ ॥

विदूषक:। मा एव्वं भण ।—

पंडुच्छविच्छुरिदणाअलदादलाणं
साहारतेल्लपरिपेसलपोफलाणं ।
कप्पूरपंसुपरिवासिदचंदणाणं
भद्दं णिदाहदिअसाणं वअस्स ! भोदु ॥ * ॥ ५ ॥

मध्याह्ने श्रीखण्डपङ्ककलना आसन्ध्यमार्द्रांशुकं
कीलालमज्जनमा-प्रदोषसमयं सायं सुरा शीतला ।
ग्रीष्मे पश्चिमयामिनीनिधुवनं यत् किमपि पञ्चेषो:
एते पञ्च शिलीमुखा विजयिन: शेषा: शरा जर्जरा: ॥

* मा एवं भण ।—

पाण्डुच्छविच्छुरितनागलतादलानां
सहकारतैलपरिपेशलपूगफलानाम् ।
कर्पूरपांशुपरिवासितचन्दनानां
भद्रं निदाघदिवसानां वयस्य ! भवतु ॥

---

ग्रीष्मे निदाघे मध्याह्ने श्रीखण्डपङ्कस्य चन्दनरसस्य कलना चर्चा, अङ्गेषु लेपनमित्यर्थ:, आसन्ध्यं सन्ध्याकालपर्यन्तम् आर्द्रांशुकम् आर्द्रं वसनम्, आप्रदोषसमयं प्रदोषसमयपर्यन्तं कीलालमज्जनं जलकेलनमित्यर्थ:, सायं समये शीतला सुरा मद्यं, तत्सेवनमित्यर्थ:, यत् किमपि अनिर्वचनीयमित्यर्थ: पश्चिमयामिन्यां रात्रिशेषे निधुवनं सुरतं, पञ्चेषो: कामस्य एते पञ्च शिलीमुखा: शरा: विजयिन: विजयशालिन:, भवन्तीति शेष:, शेषा: अन्ये शरा: जर्जरा: क्षीणा:, निष्फला इति भाव: ॥४॥

हे वयस्य ! सखे ! पाण्डुभि: छविभि: प्रभाभि: छुरिता: व्याप्ता: नागलतानां ताम्बूलीनां दला: पर्णानि येषु तथोक्तानां, सहकारा आम्रफलानि.तैलानि परिपेशलानि सुकोमलानि पूगफलानि गुवाकफलानि येषु तथाविधानां, कर्पूरपांशुभि: कर्पूररेणुभि:

[विदूषकं प्रति]। वअस्स! अत्थि तग्गदा कावि वत्ता ?। *

विदूषकः। अत्थि, सुणादु पिअवअस्सो, कधेमि सुहासिदं दे। जदो प्पहुदि कप्पूरमंजरी रक्खाभवणादो सुरंगादुआरे देवीए दिट्ठा, तदो प्पहुदि तं सुरंगादुआरं देवीए बहल-सिलासंचएण णीरंधं कदुअ पिहिदं। अणंगसेणा कलिंगसेणा कामसेणा वसंतसेणा विब्भमसेणेत्ति पंच सेणाणामधेआओ चामरधारिणीओ फारप्फुरंतकरवालहत्थपाइक्कसहस्सेण सह कारामंदिरस्स रक्खाणिमित्तं पुव्वादिसि णिउत्ताओ।

अणंगलेहा चित्तलेहा चंदलेहा मिअंकलेहा विब्भमलेहेत्ति लेहाणामधेआओ पंच सेरंधीओ पुंखिदसिलीमुहधणुहत्थेण णिविडणिबद्धतूणीरदुद्धरेण धाणुक्कसहस्सेण समं दक्खिणाए दिसाए णिवेसिदाओ।

---

येषां ते च मनांसि ददति न रतिं चित्तस्य सन्तापिनः

तेषां यान्ति जगति दीर्घतमा मासोपमा वासराः॥

वयस्य! अस्ति तद्गता काऽपि वार्त्ता ?।

अस्ति, शृणोतु प्रियवयस्यः, कथयामि सुभाषितं ते। यतः प्रभृति कर्पूरमञ्जरी रक्षाभवनात् सुरङ्गाद्वारे देव्या दृष्टा, ततः प्रभृति तत् सुरङ्गाद्वारं देव्या बहुलशिलासञ्चयेन नीरन्ध्रं कृत्वा पिहितम्। अनङ्गसेना कलिङ्गसेना कामसेना वसन्तसेना विभ्रमसेनेति पञ्च सेनानामधेयाश्चामरधारिण्यः स्फारस्फुरत्करवालहस्त-पदातिसहस्रेण सह कारामन्दिरस्य रक्षानिमित्तं पूर्वदिशि नियुक्ताः।

अनङ्गलेखा चित्रलेखा चन्द्रलेखा मृगाङ्कलेखा विभ्रमलेखेति लेखानामधेयाः

---

रचनया रम्यः मनोज्ञः तस्मिन्, जने प्रियतमे इति यावत्, सकलः, भवतीति शेषः, तेषां दीर्घा अपि दिवसाः झटिति क्षणमिव वसन्ते गच्छन्ति, ते च प्रियजना इति भावः, येषां मनसि रतिं सुखमानन्दमिति यावत्, न ददति, जगति संसारे तेषां चित्तस्य सन्तापिनः वासराः दिवसाः मासोपमाः मासतुल्याः, दीर्घतमा अतिदीर्घाः यान्ति गच्छन्ति॥ ९॥

राजा। अहो! देवीए सामग्गो अंतउरोचिदा। * (च)

विदूषकः। भो वअस्स! एसा देवीए सारंगिआ णाम सही किंपि णिवेदिदुं प्पेसिदा। †

[ ततः प्रविशति सारङ्गिका ]।

सारङ्गिका। जअदु जअदु भट्टा। देव! देवी विण्णवेदि—"अज्ज चतुत्थदिअहे भविस्सवडसाइत्तीमहूसवोवअरणाइं केलि-विमाणप्पसादमारुहिअ प्पेक्खिदव्वाइं" त्ति। ‡ (छ)

राजा। जं देवी आणवेदि। §

* अहो! देव्याः सामग्री अन्तःपुरोचिता।

† वयस्य! एषा देव्याः सारङ्गिकानाम सखी किमपि निवेदितुं प्रेषिता।

‡ जयतु जयतु भर्त्ता। देव! देवी विज्ञापयति—"अद्य चतुर्थदिवसे भावि-वटसावित्रीमहोत्सवोपकरणानि केलिविमानप्रासादमारुह्य प्रेक्षितव्यानि" इति।

§ यत् देवी आज्ञापयति।

निबिडेति।—निबिडं दृढं यथा तथा निबद्धेन तूणीरेण दुर्द्धरं दुरासदं तेन। धानुष्क-रूपेण धनुर्धरवेशनिबद्धेनेति यावत्। नतेति—नता निम्नाः आञ्चिताः कुन्ताः अस्त्रविशेषाः करेषु येषां तादृशं यत् पदातिसैन्यं तेन। मज्जनकालिकाः स्नान-धारयित्र्यः। कञ्चुकस्य चर्मनिर्मितस्य "ढाल" इति प्रसिद्धस्य, खड्गस्य च कम्पनं सञ्चालनेन भीषणं भयङ्करं तेन। व्याघ्रताः व्याहृत्य व्यापिता इत्यर्थः। परिचरन्ति सेवन्ते इति तथोक्ताः तासां कुमार्य्यः कन्यकाः। कनकचित्रदण्डकाः काञ्चन-चित्रितदण्डपाणयः।

(च) सामग्री परिचर्य्योपकरणम्। अन्तःपुरस्य अवरोधस्य उचिता सदृशी।

(छ) अद्येति।—अद्य चतुर्थदिवसे एतेन गतेषु पूर्वेषु त्रिषु दिवसेषु तदुत्सव-व्यापारः आसीदिति, शेषदिने च राजसदनसोधमं समधिकोत्सवयोगमर्हतीति च व्यज्यते। भावीति।—भाविनः भविष्यतः वटसावित्रीमहोत्सवस्य वटतलगतं सावित्री देव्या महोत्सवस्येत्यर्थः, उपकरणानि साधनानि। केलिविमानप्रासादं क्रीडार्थं विमानप्रासादं देवयानसदृशराजमन्दिरमित्यर्थः।

[ चेटी निष्क्रान्ता। उभौ प्रासादाधिरोहणं नाटयतः ]।

[ ततः प्रविशति चर्चरी ]।

विदूषकः।—

मोत्ताहलिल्लाहरणुज्जलाओ लासावसाणे चलिअंसुआओ।
सिंचंति अण्णोण्णमिमीअ पेक्ख जंताजलेहिं मणिभाअणेहिं ॥१०॥

इदो अ—

परिब्भमंतीअ विचित्तबंधं इमाइ दोसोलह णट्टणीओ।
खेलंति तालाणुगदपदाओ तुह्मांगणे दीसइ दंडरासो ॥ ११ ॥

समांससीसा समबाहुहत्था रेहाविसुद्धा अवरा अ देंति।
पंत्तीहिं दोहिं लअतालबंधं परप्परं साहिमुहा हुवंति ॥ १२ ॥

मुक्ताफलाभरणोज्ज्वला लास्यावसाने चलितांशुकाः।
सिञ्चन्त्यन्योऽन्यमिमाः पश्य यन्त्रजलैर्मणिभाजनैः ॥

इतश्च—

परिभ्रमन्त्यो विचित्रबन्धम् इमा द्विषोडश नर्त्तक्यः।
खेलन्ति तालानुगतपदास्तवाङ्गने दृश्यते दण्डरासः ॥

समांसशीर्षाः समबाहुहस्ता रेखाविशुद्धा अपराश्च ददति।
पङ्क्तिभ्यां द्वाभ्यां लयतालबन्धं परस्परं साभिमुखा भवन्ति ॥

मुक्ताफलानि आभरणोज्ज्वलाः अलङ्कारोज्ज्वलाः यासां तथोक्ताः मौक्तिकहारादिभिरलङ्कृता इति यावत्, चलितांशुकाः प्रचलद्वसनाः इमाः, नर्त्त्य इति शेषः, लास्यावसाने नृत्यविरतौ यन्त्रेषु जलानि येषां तैः यन्त्रनिर्गतजलैरिति यावत्, मणिभाजनैः रत्नमयजलपात्रैः अन्योऽन्यं परस्परं सिञ्चन्ति ॥ १० ॥

इमाः द्विषोडश द्वात्रिंशत् नर्त्तक्यः विचित्रः बन्धो यस्मिन् तत् यथा तथा परिभ्रमन्त्यः, तालेन लयेन अनुगतः पदः चरणविक्षेपः यासां तथाभूताः सत्यः खेलन्ति क्रीडन्ति ; अतः तव अङ्गने चत्वरे दण्डरासः दण्डाकारेण स्थिता मण्डलाकारवत् क्रीडनविशेषः दृश्यते ॥११॥

अपराश्च, नर्त्तक्य इति शेषः, समांसशीर्षाः तुल्यस्कन्धशिरसः, समबाहुहस्ता

मोत्तूण अण्णा मणिवारणाइं जंतेहिं धारासलिलं खिवंति ।
पडंति ताण अ पिआणमंगे मणोहुओ वारणबाणकप्पा ॥१३॥
इमा मसीकज्जलकालकाआ तिक्खच्छचावा अ विलासिणीओ
पुलिंदरूवेण जणस्स हासं समोरपिच्छाहरणा कुणंति ॥ १४ ॥
इत्थे महामंसबलीधराओ हुंकारफेक्काररवा रउद्दा ।
णिसाअरीणं पडिसीसएहिं अण्णा मसाणाभिणअं कुणंति ॥१५॥

मुक्त्वा अन्या मणिवारणानि यन्त्रैर्धारासलिलं क्षिपन्ति ।
पतन्ति ताश्च प्रियाणामङ्गे मनोभुवो वारुणबाणकल्पाः ॥
इमा मसीकज्जलश्यामकायास्तीक्ष्णचापाश्च विलासिन्यः ।
पुलिन्दरूपेण जनस्य हासं समयूरपिच्छाभरणाः कुर्वन्ति ॥
हस्ते महामांसबलिधारिण्यो हुङ्कारफेत्काररवा रौद्राः ।
निशाचरीणां प्रतिशीर्षकैरन्याः श्मशानाभिनयं कुर्वन्ति ॥

तुल्यबाहुबरा:, रैखया विभुडा:, अणुमात्रमपि असम्बलिता इति भाव:, द्वाभ्यां पङ्क्तिभ्यां श्रेणिभ्यां नयस्य नाभ्य च मध्ये यत्र तत् यथा तथा परस्परम् अन्योऽन्यं सामिमुखा: आभिमुख्येन स्थिता: भवन्ति ॥ १२ ॥

अन्या: नर्तक्य: मणिवारणानि रत्नखचितकलशानि मुक्त्वा त्यक्त्वा यन्त्रैः धारासलिलं क्षिपन्ति मुञ्चन्ति, ताश्च सलिलधारा इत्यर्थ:, प्रियाणां सत्कान्तानाम् अङ्गे मनोभुव: कामस्य वारुणबाणकल्पा: वारुणास्त्रतुल्या: सत्य: पतन्ति ॥ १३ ॥

मषीवत् कज्जलवत्त्व श्यामा: काया: यासां तथोक्ता: कृष्णवर्णा इत्यर्थ:, तीक्ष्णो चापो धनुरिव यासां तथाविधा:, समयूरपिच्छाभरणा: मयूरपिच्छाभरणशोभिता इत्यर्थ:, इमा विलासिन्य: पुलिन्दरूपेण व्याधरूपेण जनस्य हासं कुर्वन्ति जनयन्ति ॥१४॥

अन्या:, नार्य्य इति शेष:, हस्ते महामांसं नरमांसमेव बलिम् उपहारं धारयन्तीति तथोक्ता:, हुङ्कारा एव फेत्काररवा: शृगालध्वनय: यासां तथाविधा:, अत एव रौद्रा: भीषणा: सत्य:, निशाचरीणां पिशाचीनां राक्षसीनां वा प्रतिशीर्षकैः प्रतिरूपैः श्मशानस्य अभिनयं प्रदर्शनव्यापारं कुर्वन्ति ॥ १५ ॥

काबि वादिदकरालहुडुक्कारम्भमद्दलरवेण मिअच्छी ।
भूलदाहिं परिवाटिवलाहिं चेटिकम्मकरणम्मि पउत्ता ॥ १६ ॥
किंकिणीकिदरणज्झणसद्दा कंठगीदलअजंतिदताला ।
जोगिणीवलअणच्चणकेलिं तालणेउररवं विरअंति ॥ १७ ॥
कोदुहल्लवसचंचलवेसा वेणुवादणपरा अवराओ ।
कालवेसवसहासिदलोआ ओसरंति पणमंति हसंति ॥ * ॥ १८ ॥

[ प्रविश्य ] ।

सारङ्गिका । [ पुरोऽवलोक्य ] । एसो महाराओ उणो मरगअ-कुंजं ज्जेव्व गदो, कदलीघरं अ अणुप्पइट्टो ; ता अग्गदो गदुअ देवीविसाविअं विण्णवेमि । [ उपसृत्य ] । जअदु जअदु

कापि वादितकरालहुडुक्कारम्भमर्दलरवेण मृगाक्षी ।
भ्रूलताभ्यां परिपाटीचलाभ्यां चेटीकर्मकरणे प्रवृत्ता ॥
किङ्किणीकृतरणज्झणशब्दाः कण्ठगीतलययन्त्रिततालाः ।
योगिनीवलयनर्तनकेलिं तालनूपुररवं विरचयन्ति ॥
कौतूहलवशचञ्चलवेशा वेणुवादनपरा अपराः ।
कालवेषवशहासितलोका अपसरन्ति प्रणमन्ति हसन्ति ॥

काऽपि मृगाक्षी हरिणनयना, मर्दलकेति ख्यातः, रवेण मनोहरेण मर्दलस्य वादित्र-भेदस्य रवेण वादितं नादितं करालं भीषणं हुडुक्कं "हुड्क्को" इति प्रसिद्धं वाद्यविशेषम् इति यावत् यया तथोक्ता, मर्दलध्वनिना प्रतिहततया वाद्यविशेषस्य रणनमिति भावः, परिपाट्या भङ्गिविशेषेण चलाभ्यां भ्रूलताभ्यां चेटीनां सहचरीणां कर्मकरणे प्रवृत्ता ॥ १६ ॥

किङ्किण्या क्षुद्रघण्टिकया कृतः रणज्झणशब्दः याभिः तथोक्ताः, कण्ठेषु गीतस्य लयेन यन्त्रितः नियमितः तालः याभिः तथाविधाः, योगिनीनां परिव्राजिकानां वलयेन यत् नर्तनं तदेव केलिः क्रीडा तं तालेन नूपुरयोः रवो यस्मिन् तत् यथा तथा विरचयन्ति कुर्वन्ति ॥ १७ ॥

कौतूहलस्य वशेन चञ्चलः वेशः यासां तथोक्ताः, वेणुर्वंशीवाद्यं तस्य वादनपराः वादनासक्ताः, अपराः अन्याः कालवेशदर्शनेन मलिनवेशवशेन हासिता लोकाः याभिः तथाभूताः सत्यः, अपसरन्ति प्रणमन्ति हसन्ति च ॥ १८ ॥

देवी। देवी एदं विण्णवेदि जधा "संझासमए जूअं मए परिणेदव्वा"। †

विदूषकः। भो! किं एदं अकालकोहंडपडणं? ‡

राजा। सारंगिए! सव्वं वित्थरेण कधेहि। §

सारङ्गिका। एव्वं विण्णवीअदि, अणंतरातिक्कंतचउद्दसीदिअहे देवीए पोम्मराअमणिमई गोरी कदुअ भेरवाणंदेण पडिट्ठाविदा, सअं अ दिक्खा गहिदा। तदो ताए विण्णत्तो जोगीसरो गुरुदक्खिणाणिमित्तं। भणिदं अ तेण, जइ अवस्सं गुरुदक्खिणा दादव्वा, ता एसा दीअदु महाराअस्स। तदो देवीए विण्णत्तं, जं आदिसदि भअवं। उणो वि उल्लविदं तेण, अत्थि एत्थ लाटदेसे चंडसेणो णाम राजा, तस्स दुहिदा घणसारमंजरी णाम, सा दइवण्णेहिं आदिट्ठा, एसा चक्कवट्टिघरिणी भविस्सदि त्ति; तदो महाराअस्स परिणेदव्वा, तेण गुरुदक्खिणा दिण्णा भोदि, भट्टा वि चक्कवट्टी किदो भोदि। तदो देवीए विहसिअ भणिअं, जं आदिसदि भअवं। अहं च विण्णविदुं पेसिदा गुरुस्स गुरुदक्खिणाणिमित्तं। ¶ (ज)

† एष महाराजः पुनर्मरकतकुञ्जमेव गतः, कदलीगृहञ्च अनुप्रविष्टः; तदग्रतो गत्वा देवीविज्ञापितं विज्ञापयामि। जयतु जयतु देवः। देवी इदं विज्ञापयति यथा "सन्ध्यासमये यूयं मया परिणेतव्याः"।

‡ भोः! किमेतदकालकूष्माण्डपतनम्?

§ सारङ्गिके! सर्वं विस्तरेण कथय।

¶ एवं विज्ञाप्यते, अनन्तरातिक्रान्तचतुर्दशीदिवसे देव्या पद्मरागमणिमयी गौरी कृत्वा भैरवानन्देन प्रतिष्ठापिता, स्वयञ्च दीक्षा गृहीता। ततस्तया विज्ञप्तो योगीश्वरो गुरुदक्षिणानिमित्तम्। भणितञ्च तेन, यद्यवश्यं गुरुदक्षिणा दातव्या, तदेषा दीयतां महाराजाय। ततो देव्या विज्ञप्तं, यदादिशति भगवान्। पुनरपि उल्लपितं तेन, अस्ति अत्र लाटदेशे चण्डसेनो नाम राजा, तस्य दुहिता घनसारमञ्जरी नाम, सा दैवज्ञैः आदिष्टा, एषा चक्रवर्त्तिगृहिणी भविष्यतीति; ततो महाराजस्य

विदूषकः। [विहस्य]। एदं तं संविधाणअं सीसे सप्पो, देसंतरे वेज्जो। इह अज्ज विवाहो, लाटदेसे घणसारमंजरी। * (झ)

राजा। किं ते भेरवाणंदस्स प्पहाओ ण प्पच्चक्खो ?। [तां प्रति]। कहिं संपदं भेरवाणंदो ?। † (ञ)

सारङ्गिका। देवीकारिदप्पमदुज्जाणस्स मज्झट्ठिदवडतरुमूले चामुंडाअदणे भेरवाणंदो देवी अ आअमिस्सदि; ता अज्ज दक्खिणाविहिदो कोदुहलवरो विवाहो; ता इह ज्जेव्व देवेण ठादव्वं। ‡ (ट)

[इति परिक्रम्य निष्क्रान्ता]।

परिवर्तितव्या, तेन गुरुदक्षिणा दत्ता भवति, भवानपि चक्रवर्ती कृतो भवति। ततो देव्या विहस्य भणितं, यत् चादिशति भगवान्। चण्डस्य विज्ञापयितुं प्रेषिता गुरोर्गुरुदक्षिणानिमित्तम्।

* एतत्तत् संविधानकं शीर्षे सर्पः, देशान्तरे वैद्यः। इहाद्य विवाहः, लाटदेशे घनसारमञ्जरी।

† किन्ते भैरवानन्दस्य प्रभावो न प्रत्यक्षः ?। कुत्र साम्प्रतं भैरवानन्दः ?।

‡ देवीकारितप्रमदोद्यानस्य मध्यस्थितवटतरुमूले चामुण्डायतने भैरवानन्दो देवी च आगमिष्यति; तदद्य दक्षिणाविहितः कौतूहलपरो विवाहः; तदिहैव देवेन स्थातव्यम्।

(ग) अनन्तरा अव्यवहिता अतिक्रान्ता विगता या चतुर्दशी तिथिः तां हृदये। गौरी दुर्गामूर्तिरित्यर्थः। दीक्षा संस्कार इत्यर्थः, भैरवानन्दं गुरुं कृत्वा तस्मात् इष्टमन्त्रो गृहीत इति भावः। एषा घनसारमञ्जरी। उपस्थितम् उक्तम्। तेन भैरवानन्देन। चक्रवर्ती सार्वभौमः कृतः, त्वमिति शेषः।

(झ) संविधानकं व्यापारः।

(ञ) भैरवानन्दः योगबलेन इदानीमेव तां घनसारमञ्जरीमिहानेतुं शक्नोतीति भावः।

(ट) देव्या कारितं यत् प्रमदोद्यानं तस्य। चामुण्डा काली तस्या आयतने मन्दिरे।

राजा। वअस्स! सव्वं एदं भेरवाणंदस्स विजिंभिदं त्ति तक्केमि। * (ठ)

विदूषकः। एव्वं णेदं। ण क्खु मिअलंछणमंतरेण चंदो मिअंकमणिपुत्तलिअं पस्सेदअदि। ण क्खु सरअसमीरमंतरेण सेफालिआकुसुमुक्करं विकासेदि। † (ड)

[ ततः प्रविशति भैरवानन्दः ]।

भैरवानन्दः। इअं सा वडतरुमूले णिब्भिण्णस्स सुरंगादुआरस्स पिहाणं चामुंडा। (ढ) [ छलेन प्रणम्य पठति ]।—

कप्पंतकेलिभवणे कालस्स पुराणरुहिरसुरम्।
जअदि पिअंती चंडी परमेट्ठिकवालचसएण॥ १९॥

[ उपविश्य ]। अज्जवि ण णिग्गच्छदि सुरंगादुआरेण कप्पूरमंजरी। ‡

वयस्य! सर्वमेतत् भैरवानन्दस्य विजृम्भितमिति तर्कयामि।

† एवमेतत्। न खलु मृगलाञ्छनमन्तरेण चन्द्रो मृगाङ्कमणिपुत्तलीं प्रस्वेदयति। न खलु शरत्समीरमन्तरेण शेफालिकाकुसुमोत्करं विकासयति।

‡ इयं सा वटतरुमूले निर्भिन्नस्य सुरङ्गाद्वारस्य पिधानं चामुण्डा।—

कल्पान्तकेलिभवने कालस्य पुराणरुधिरसुराम्।
जयति पिबन्ती चण्डी परमेष्ठिकपालचषकेण॥

अद्यापि न निर्गच्छति सुरङ्गाद्वारेण कर्पूरमञ्जरी।

(ठ) विजृम्भितं विलसितम्।

(ड) मृगलाञ्छनं चन्द्रम् अन्तरेण विना, मृगाङ्कमणिपुत्तलीं चन्द्रकान्तमणिपुत्तलिकां प्रस्वेदयति आर्द्रयति। शरत्समीरं शारदीयपवनम् अन्तरेण विना। विकासयति, शरत्समयवायुरिति शेषः।

(ढ) निर्भिन्नस्य उद्घाटितस्य। पिधानम् आच्छादनम्, आवरणभूतेति यावत्, चामुण्डा काली। तस्या एवाधेव सुरङ्गाद्वारमावृतमिति भावः।

कालस्य महाकालरूपिणो रुद्रस्य कल्पान्त एव संहारकाल एव केलिभवनं क्रीडामन्दिरं तस्मिन् चण्डी महाकाली परमेष्ठिनो ब्रह्मणः कपालचषकेण कपाल-

[ ततः प्रविशति सुरङ्गोद्घाटितकेन कर्पूरमञ्जरी ]।

कर्पूरमञ्जरी। भअवं ! प्पणामिज्जसि। *

भैरवानन्दः। उइदं वरं लहेसु। इह ज्जेव्व उवविसदु। †

[ कर्पूरमञ्जरी तथा करोति ]।

भैरवानन्दः। [ स्वगतम् ]। अज्ज वि ण आअच्छदि देवी। ‡

[ प्रविश्य ]।

राणी। [ परिक्रम्य अवलोक्य च ]। इअं भअवदी चामुंडा। [ प्रणम्य अवलोक्य च ]। अए ! इअं कप्पूरमंजरी !! ता किं णदं ?। [ भैरवानन्दं प्रति ]। इदं विण्णवीअदि, णिअभवणे कदुअ विवाहसामग्गिं आअदम्हि, तदो तं गेण्हिअ आगमिस्सं। §

भैरवानन्दः। वच्छे ! एव्वं करीअदु। ¶

[ राणी आज्ञया परिक्रामति ]।

भैरवानन्दः। [ विहस्य स्वगतम् ]। इअं कप्पूरमंजरीठाणं अण्णेसिदुं गदा। [ प्रकाशम् ]। पुत्ति कप्पूरमंजरि ! सुरंगादुआरेण ज्जेव्व तुरिदपदं गदुअ सट्ठाणे चिट्ठ, देवीआअमणे उणो आअंतव्वं। **

[ कर्पूरमञ्जरी तथा करोति ]।

* भगवन् ! प्रणम्यसे।

† उचितं वरं लभस्व। इहैव उपविश।

‡ अद्यापि नागच्छति देवी।

§ इयं भगवती चामुण्डा। अयि ! इयं कर्पूरमञ्जरी !! तत् किमिदम् ? इदं विज्ञाप्यते, निजभवने कृत्वा विवाहसामग्रीम् आगताऽस्मि, ततस्तां गृहीत्वा आगमिष्यामि।

¶ वत्से ! एवं क्रियताम्।

** इयं कर्पूरमञ्जरीस्थानमन्वेष्टुं गता। पुत्रि कर्पूरमञ्जरि ! सुरङ्गाद्वारेणैव त्वरितपदं गत्वा स्वस्थाने तिष्ठ, देव्यागमने पुनरागन्तव्यम्।

रूपवानपाङ्गेण पुराऽनङ्गःशरसुरा पूर्वतनभाविना औचित्यदर्शनाय विपणी जयति सर्वोत्कर्षेण वर्तते ॥ १९ ॥

देवी। एदं रक्खागिहम्। [प्रविश्यावलोक्य च]। अए! इअं कप्पूरमंजरी!! सा का वि सारिच्छा मए दिट्ठा! वच्छे कप्पूरमंजरि! कोरिसं दे सरीरं?। [आकाशे]। किं भणासि, मह सरीरे वेअणा?। [स्वगतम्]। ता उणो तहिं गमिस्सं। [प्रविश्य पार्श्वतोऽवलोक्य च]। हला सहीओ! विवाहोवअरणाइं लहुं गेण्हिअ आअच्छध। [इति परिक्रामति]। * (ण)

[प्रविश्य कर्पूरमञ्जरी तथैवास्ते]।

राजा। [पुरोऽवलोक्य]। इअं कप्पूरमंजरी!!। †

भैरवानन्दः। वच्छे! विब्भमलेहाए आणीदाइं विवाहोवअरणाइं? ‡

देवी। आणीदाइं। किं उण घणसारमंजरीसमुचिदाइं आहरणाइं विसुमरिदाइं। ता उणो गमिस्सं। §

भैरवानन्दः। एव्वं करीअदु। ¶

[देवी नाटितकेन निष्क्रामति]।

---

इदं रक्षागृहम्। अयि! इयं कर्पूरमञ्जरी!! सा काऽपि सदृशी मया दृष्टा। वत्से कर्पूरमञ्जरि! कीदृशं ते शरीरम्? किं भणसि, मम शरीरे वेदना?। तत् पुनस्तत्र गमिष्यामि। हला सख्यः! विवाहोपकरणानि लघु गृहीत्वा आगच्छत।

† इयं कर्पूरमञ्जरी!!

‡ वत्से! विभ्रमलेखया आनीतानि विवाहोपकरणानि?।

§ आनीतानि। किं पुनर्घनसारमञ्जरीसमुचितानि आभरणानि विस्मृतानि। तत्पुनर्गमिष्यामि।

¶ एवं क्रियताम्।

(ण) आकाशे इति।—"किं ब्रवीषि? इत्येव विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमपि चेत् तत् स्यात् आकाशभाषितम्।" इति भरतमुनिः।

भैरवानन्दः। पुत्ति कप्पूरमंजरि! तह ज्जेव करीअदु। *

[कर्पूरमञ्जरी निष्क्रान्ता]।

राजा। [स्वगतं प्रविश्य कर्पूरमञ्जरीं दृष्ट्वा]। अए! सारिच्छएण विडंबिदम्हि !!। [स्वगतम्]। झाणविमाणेण णिव्विग्घपरिसप्पिणा ताम् आणेदि महाजोई। [प्रकाशम्]। सहीओ! जं जं णिवेदिदं, तं तं गेण्हिअ आअच्छध। [आमुक्ताभरणप्रवेशनाटितकेन तामवलोक्य]। अहो सारिच्छअं !!। † (त)

भैरवानन्दः। देवि! उवविस। महाराओ वि आअदो ज्जेव वट्टदि। ‡

[ततः प्रविशति राजा विदूषकः सारङ्गिका च]।

भैरवानन्दः। आसणं महाराअस्स। §

[सर्वे यथोचितमुपविशन्ति]।

राजा। [नायिकां प्रति]। एसा सरीरिणी मअरद्धअ-पाअडिआ, देहांतरेण संठिदा सिंगाररसलच्छीव? दिअस-संचारिणी पुण्णिमाचंदचंदिआ; अवि अ प्पगुणगुणमाणिक्क-मंजूसा, रअणमई अंजणसलाआ, तधा अ एसा रअण-कुसुमणिप्पसा मदुलच्छी। (थ) किं च—

* पुत्रि कर्पूरमञ्जरि! तथैव क्रियताम्।

† अये! सादृश्येन विडम्बितोऽस्मि !! ध्यानविमानेन निर्विघ्नपरिसर्पिणा तामानयति महायोगी। सख्यः! यत् यन्निवेदितं, तत्तत् गृहीत्वा आगच्छत। अहो! सादृश्यम् !!।

‡ देवि! उपविश। महाराजोऽपि आगत एव वर्त्तते।

§ आसनं महाराजस्य।

¶ एषा शरीरिणी मकरध्वजपताकिका, देहान्तरेण संस्थिता शृङ्गाररस-लक्ष्मीरिव, दिवससञ्चारिणी पूर्णिमाचन्द्रचन्द्रिका; अपि च प्रगुणगुणमाणिक्य-मञ्जूषा, रत्नमयी अञ्जनशलाका, तथा चैषा रत्नकुसुमनिष्पन्ना मधुलक्ष्मीः। किञ्च—

(त) सादृश्येनेति।—सादृश्येन तुल्यरूपत्वेन। विडम्बिता विप्रलब्धा। निर्विघ्नं निर्बाधं यथा तथा परिसर्पति प्रसरतीति तथोक्तेन।

भुअणजअपदाआ रूअसोहा इमीए
जह जह णअणाणं गोअरे जस्स जादि ।
वसइ मअरकेदू तस्स चित्ते विचित्तो
वलइदधणुदंडो पुंखिदेहिं सरेहिं ॥ ¶ ॥ २० ॥

विदूषकः । [ जनान्तिकम् ] । सच्चं किदं तुए आभाणकं । तडं गदाए वि णोकाए ण विससीदव्वं ; ता तुण्हीं चिट्ठ । * (द)

राज्ञी । [ कुरङ्गिकां प्रति ] । तुमं महाराअस्स णेवच्छं कुरु । सारंगिआ घणसारमंजरीए करेदु । †

[ इत्युभे उभयोर्विवाहनेपथ्यकरणं नाटयतः ] ।

भैरवानन्दः । उवज्झाओ हक्कारीअदु । ‡ (ध)

भुवनजयपताका रूपशोभाऽस्याः
यथा यथा नयनयोर्गोचरं यस्य याति ।
वसति मकरकेतुस्तस्य चित्ते विचित्रो
वलयितधनुर्दण्डः पुङ्खितैः शरैः ॥

* सत्यं कृतं त्वया आभाणकम् । तटं गताया अपि नौकाया न विश्वसितव्यम् ; तत्तूष्णीं तिष्ठ ।

† त्वं महाराजस्य नेपथ्यं कुरु । सारङ्गिका घनसारमञ्जर्याः करोतु ।

‡ उपाध्याय आकार्यताम् ।

(ध) भवीरिश्रो मूर्त्तिमती । मकरध्वज एव पापः पापाचारः तस्य ऋद्धिरेव ऋद्धिका सम्पत्तिरित्यर्थः । केचित्तु मकरध्वजपापर्द्धिका मकरध्वजस्य प्रतिस्पर्द्धिका इति ; अपरे तु पापर्द्धिका मृगयेति च व्याचक्षते । यद्वा—पाणिद्धिआ इत्यस्य पाणयिनीका इति संस्कृतं, कामस्य सन्दीपनीत्यर्थः । अगुंफति ।—अगुणा प्रकृष्टा गुणा यस्याः तादृशी माणिक्यरूपा माणिक्यपेटिका । मधुलग्नी: वसन्तश्रीः । भवीरिश्रो इत्यनेन सर्वान्वयः ।

अस्याः रूपशोभा सौन्दर्यश्रीः यस्य जनस्य यथा यथा नयनयोः गोचरं याति तस्य जनस्य चित्ते विचित्रः मकरकेतुः कामः पुङ्खितैः संहितैः शरैः वलयितः मण्डलितः धनुर्दण्डः कार्मुकयष्टिर्येन तथाभूतः सन् वसति ॥ २० ॥

(द) आभाणकं लोकोक्तिः । तटं तीरं गतायाः प्राप्ताया अपि ; तत्रापि जल-मज्जनस्य यथा सम्भवः, तथा इंहमारब्धेऽपि अस्या सम्पादनायाः सम्भावादिति भावः ।

राज्ञी। अज्जउत्त ! एसो उवज्झाओ अज्जकविंजलओ चिट्ठदि ; ता करेदु अग्गिआरिअं। * (न)

विदूषकः। एस सज्जोम्हि। भो वअस्स ! उत्तरीए गंठिं दाइस्सं, दाव हत्थेण हत्थं गेण्ह कप्पूरमंजरीए। †

राजा। [सचमत्कारम्]। कुदो कप्पूरमंजरी !!। ‡

भैरवानन्दः। [तं तथा भावमुपलभ्य विदूषकं प्रति]। तुमं सुट्ठुतरं भुल्लोसि, जदो कप्पूरमंजरीए घणसारमंजरीत्ति णामांतरं जाणासि। §

राजा। [करमादाय]।—

जे कंटआ तिउसमुसलफलाणं संति
जे केदईकुसुमगब्भदलावलीसु।
फंसेण णूणमिह मज्झ सरीरअस्स।
ते सुंदरीअ बहला पुलअंकुराओ ॥ ण ॥२१॥

* आर्य्यपुत्र ! एष उपाध्याय आर्य्यकपिञ्जलस्तिष्ठति ; तत् करोतु अग्न्याचार्य्यकम्।

† एष सज्जोऽस्मि। भो वयस्य ! उत्तरीये ग्रन्थिं दास्यामि, तावद्धस्तेन हस्तं गृहाण कर्पूरमञ्जर्य्याः।

‡ कुतः कर्पूरमञ्जरी ?

§ त्वं सुष्ठुतरं भ्रान्तोऽसि, यतः कर्पूरमञ्जर्य्या घनसारमञ्जरीति नामान्तरं जानासि।

ये कण्टकास्त्रपुसमुषलफलानां सन्ति
ये केतकीकुसुमगर्भदलावलीषु।
स्पर्शेन नूनमिह मम शरीरस्य
ते सुन्दर्य्या बहलाः पुलकाङ्कुराः॥

(ध) उपाध्यायः पुरोहितः। आचार्य्यताम् आहूयताम्।

(न) अग्न्याचार्य्यकः अग्नेर्नाम आचार्य्यः अग्न्याचार्य्यः, स एवेति अग्न्याचार्य्यकः; पुरोहितः इत्यर्थः तत्।

त्रपुषस्य "[illegible]" इति ख्यातस्य फलविशेषस्य स्निग्धानि सुन्दराणि बीजानि

विदूषकः। भो वअस्स! आमरीओ दिज्जदु। (प) हुदवहे लाजंजलीओ खिवीअदु! *

[ राजा भ्रमणं नाटयति। नायिका धूमेन व्याकुलमुखी तिष्ठति। राजा परिवर्त्तयति। राज्ञी सपरिवारा निष्क्रान्ता ]।

भैरवानन्दः। विवाहे दक्खिणा दिज्जदु आचारिअस्स। †

राजा। दिज्जदु। वअस्स! गामसअं ते दिण्णं। ‡

विदूषकः। सोत्थि होदु। § [ इति नृत्यति ]।

भैरवानन्दः। महाराअ! किं ते उणो वि प्पिअं कुणोमि?। ¶

राजा। जोइस्सर! किमवरं प्पिअं वट्टदि? जदो—

कुंतलेस्सरसुआकरप्फंसप्फाररोक्खसिद्धिओकिदसग्गो।
पालएमि वसुहातलरज्जं चक्कवट्टिपदवीरमणिज्जं॥ २२॥

तहावीदं होदु दाव—

* भो वयस्य! आमर्यो दीयन्ताम्। हुतवहे लाजाञ्जलयः क्षिप्यन्ताम्।

† विवाहे दक्षिणा दीयताम् आचार्य्यस्य।

‡ दीयते। वयस्य! ग्रामशतं ते दत्तम्।

§ स्वस्ति भवतु।

¶ महाराज! किन्ते पुनरपि प्रियं करोमि?।

** योगीश्वर! किमपरं प्रियं वर्त्तते? यतः—

कुन्तलेश्वरसुताकरस्पर्शस्फारसौख्यसिद्धिनिर्जितस्वर्गः।
पालयामि वसुधातलराज्यं चक्रवर्त्तिपदवीरमणीयम्॥

तथाऽपि इदं भवतु तावत्—

यानि फलानि तेषां ग कण्टकाः सूच्याग्राः चवयवविशेषाः सन्ति, केतकीकुसुमानां सम्बन्धावबोधे पत्रापवर्तिषु ये, कण्टकाः सन्तीति पूर्वेणान्वयः, ते नूनं, मृणालिन्युपेक्षायाम, इह परिणयने इति शेषः, सुन्दर्याः कर्पूरमञ्जर्याः अङ्गेन सम आरोप्य बद्धाः बहवः पुलकाङ्कुराः रोमाञ्चनिकराः॥ २१॥

(प) आमर्य्यः अग्निप्रदक्षिणोपकरणानि, दीयन्तां क्रियन्ताम्।

सच्चं णंदउ सज्जणाणं सअलो वग्गो खलाणं पुणो
णिच्चं खिज्जउ होंतु बम्हणजणा सच्चासिसो सव्वदा।
मेहो मुंचउ संचिदं वि सलिलं सस्सोचिदं भूदले
लोओ लोहपरम्मुहोऽणुदिणं धम्मे मई होदु अ ॥*॥ २३ ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति चतुर्थं जवनिकान्तरम्।

इति श्रीराजशेखरविरचिता कर्पूरमञ्जरी समाप्ता।

सत्यं नन्दतु सज्जनानां सकलो वर्गः खलानां पुन-
र्नित्यं खिद्यतु भवन्तु ब्राह्मणजनाः सत्याशिषः सर्वदा।
मेघो मुञ्चतु सञ्चितमपि सलिलं सस्योचितं भूतले
लोको लोभपराङ्मुखोऽनुदिनं धर्मे मतिर्भवतु च ॥

कुन्तलेश्वरस्य सुता कर्पूरमञ्जरी तस्याः करस्पर्शेन यत् स्फारं निरतिशयं सौख्यं सुखसन्तानः, तेन विलघीकृतः तुच्छीकृत इति यावत्, स्वर्गो येन तथाभूतः सन् चक्रवर्त्तिनः सार्वभौमस्य पदव्या पदप्राप्त्या रमणीयं मनोज्ञं वसुधातलराज्यं पालयामि ॥ २२ ॥

सत्यं इति।—सज्जनानां साधूनां सकलः वर्गः समूहः सत्यं नन्दतु आनन्दमनुभवतु, पुनः किन्तु खलानां दुर्जनानां सकलो वर्गः नित्यं सततं खिद्यतु दुःखमनुभवतु इत्यर्थः। ब्राह्मणजनाः सर्वदा सत्याशिषः सफलाशीर्वादाः भवन्तु। मेघः सञ्चितमपि सलिलं भूतले सस्योचितं मुञ्चतु त्यजतु, यदि च सञ्चितधनत्यागो लोकानां दुष्करः, तथाऽपि यावता सस्योत्पत्तिर्भवेत्, तावत्परिमितस्य सञ्चितस्य दानं मेघस्य समुचितप्रकृतेः समुचितमिति भावः। लोकः अनुदिनं लोभपराङ्मुखः तथा धर्मे मतिश्च, लोकानामिति शेषः, भवतु। "सत्यं" इत्यत्र "सार्थः" इति पाठे—सज्जनानां सार्थः समूह इत्यर्थः, "भवतु ब्राह्मणजनः" इति पाठे—सत्याशीरिति संस्कृतम् ॥ २३ ॥

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता कर्पूरमञ्जरीव्याख्या समाप्ता।

---

समाप्तोऽयं ग्रन्थः।